KÂVYAMÂLÂ. 70.



# THE YAS'ASTILAKA

OF

## SOMADEVA SÛRI.

WITH THE COMMENTARY OF S'RUTADEVA SÛRI

PART II.

EDITED BY

MAHÂMAHOPÂDHYÂYA PANDIT S'IVADATTA,

Head Paṇḍit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJI,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRNAYA SÂGARA' PRESS.

BOMBAY

1903

*Price 2¾ Rupees*

॥ श्रीः ॥

भट्टनारायणप्रणीतं

# वेणीसंहारम् ।

जगद्धरकृतया टिप्पण्या समवेतम् ।



परबोपाह्वेन पाण्डुरङ्गात्मजेन काशीनाथेन
माडगांवकरोपाभिधेन रामचन्द्रसूनुना कृष्णेन च
पाठान्तरैः सहितं संशोधितम् ।



तच्च

शाके १८१९ वत्सरे

मुम्बापुर्यां

निर्णयसागरयन्त्रालयाधिपतिना स्वकीये मुद्रायन्त्रे
मुद्रयित्वा प्राकाश्यं नीतम् ।

मूल्यं १२ आणकाः ।

॥ श्रीः ॥

# वेणीसंहारम्।

## जगद्धरकृतया टिप्पण्या समेतम्।

प्रथमोऽङ्कः।

निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः
करैरिन्दोरन्तश्छुरित इव संभिन्नमुकुलः।
विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः
प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम् ॥ १ ॥

---

कण्ठस्थाहिमणीविभूषिततनू राजज्जटापल्लवो
हृष्यन्मौलिसुधाकरैककुसुमस्तत्पञ्चशाखाश्रयः।
स्थाणुर्मे फलदोऽस्तु नित्यमधिक गौरीमुखेन्दुद्रव-
त्पीयूषद्रवपानदोहदवशात्कल्पद्रुमत्व वहन् ॥
गुरूपदेशमासाद्य विभाव्य निपुण हृदा।
श्रीजगद्धरधीरेण टिप्पणी क्रियते शुभा ॥

इह तावन्निर्विघ्न प्रारिप्सितसिद्धिमनुरुध्य कवि स्वेष्टदेवताकीर्तनरूप मङ्गल नान्दीमुखेनाह—**निषिद्धैरिति**। अय पुष्पाणामञ्जलिर्नोऽस्माक सिद्धि विधत्ता करोतु। कीदृशीम्। अस्य सदस. सभाया नयनसुभगा नेत्रप्रीतिजननीम्। तथा च सदस्यानामपि नेत्रानुरागम्। विदधात्विति भावः। कीदृशोऽञ्जलि । हरिचरणयो. कृष्णपदद्वये प्रकीर्णो विस्तीर्ण.। इष्टदेवतापूजोपकरणीभूत इति भाव। अत एव तद्धारा देवता प्रीता स्यात्तथा च निर्विघ्नस्वेष्टलाभ इति मङ्गलाचरणफलम्। अत्राञ्जलिपदेन लक्षणयाञ्जलिस्थपुष्पाणि लक्ष्यन्ते। पुन' कीदृश । एभिर्मधुकरैर्लुलितमकरन्द पुरोवर्तिभ्रमरपीतरस'। कीदृशैः। निषिद्धैरपि निवारितैरपि। करादिचालनेन निवारिता अपि प्रसभरसलोभात्पतन्तस्त इति भाव । यद्वा। निषिद्धैर्धर्मशास्त्रनिषिद्धै। 'छिद्राणि कीटजुष्टानि कुसुमानि विवर्जयेत्' इति मनुवचनात्। पुन कीदृश । सभिन्नमुकुल. प्रफुल्लकलिकाक। अत्रोत्प्रेक्षित कारणमाह—अभ्यन्तर इन्दो करैश्छुरित[illegible]

अपि च ।

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् ।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते-
रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ २ ॥

---

करकरसपर्कादिव प्रफुल्लतेति भाव· । 'मकरन्द पुष्परस.' इत्यमर. । अत्र हिमकरकरस्पर्शान्मुकुलसभेदेन निशाकरप्रकाश्यानि कुसुमानि योग्यतया विवक्षितानीति केचित् । सामान्यत पुष्पाणीह विवक्षितानि । प्रफुल्लताहेतुश्चोत्प्रेक्षितोऽन्यत्रस्थ इव । अन्यथा चोत्प्रेक्षाया अप्रसङ्ग । उत्प्रेक्षा च—'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते या तु तामुत्प्रेक्षा विदुर्बुधा ॥' इति लक्षिता । इवशब्दश्चोत्प्रेक्षाभिव्यञ्जक । तथा च दण्डी । 'मन्ये शङ्के ध्रुव प्रायो नूनमित्येवमादिभि । उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृश ॥' इत्यपरे । 'मधुव्रतो मधुकरो मधुलिड्' इत्यमर । 'भानु करो मरीचि' इति च । 'भिन्नौ दारितसगतौ' इति च । 'द समिति सयति' इति शाश्वतः । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । इह नान्दी त्रिभिः श्लोकैर्द्वादशपदा । तदुक्त सगीतसर्वस्वे—'प्रशस्तपदविन्यासा चन्द्रसकीर्तनान्विता । आशीर्वादपरा नान्दी योज्येय मङ्गलान्विता ॥ काचिद्द्वादशपदा नान्दी काचिदष्टपदा तथा । सूत्रधार· पठेदेना मध्यम स्वरमाश्रितः ॥ चन्द्रसकीर्तन यत्र तदधीनो रसो मत. । प्रीते चन्द्रमसि स्फीता रसश्रीरिति भातुकि ॥' इति । तत्रापि पद केचन विभक्त्यन्तमूचिरे । केचित्तु पद पद्यस्य चतुर्थभागमाहु । तदिह द्वितीयपक्षाश्रयणेन त्रिभि श्लोकैर्द्वादशपदा नान्दी । इह निषिद्धपदेन मित्रादिना निषिद्धा अपि सुयोधनादयो निजदर्पादगणिततन्निषेधा युद्धायैव लग्ना इति ध्वनितम् । सभिन्नमुकुलपदेन च युधिष्ठिरादीना वनवासादिदु खानन्तर सुखप्रकाशो दर्शित इति केचित् । नान्द्या वस्तुनिर्देशस्यानङ्गतया तत्सूचनमत्राकिंचित्करम् । सूचन तु 'सत्पक्षा –'(१।६) इत्यादिनाग्रे कर्तव्यमेव । तत्प्रतीकस्य तदर्थत्वादित्यन्ये ॥१॥ बहुविघ्नशङ्कया तन्नाशार्थं पुनर्मङ्गलमाचरन्नान्दीनिर्वाहार्थमाह—**कालिन्द्या इति** । कसद्विष कृष्णस्यानुनयो वो युष्मान्पुष्णातु पुष्टान्करोतु । कीदृश. । अक्षुण्णोऽखण्डित· । अत्र हेतुमाह—प्रसन्नदयितादृष्टस्य । सप्रसादराधावलोकितस्येत्यर्थ । कीदृशस्य । केलिकुपिता कौतुक एव क्रोधवर्ती राधिका कालिन्द्या यमुनाया पुलिनेषु तोयोत्थितदेशेषूत्सृज्य त्यक्त्वानुगच्छतोऽनुप्रयातस्य । कीदृशीम् । रासे गोपक्रीडाया रसमनुराग गच्छन्ती-

अपि च ।

दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः[1]
शान्तान्तस्तत्त्वसारैः[2] सकरुणमृषिभिर्विष्णुना सस्मितेन[3] ।

---

मत एवाश्रुकलुषा रुदतीम् । तथा च प्रणयकुपिता रासानुरागिणी रुदती चेति राधाया अवस्थात्रय सूचितम् । इदमालोक्य भगवतापि तदनुगम कृत इत्याशय । अत एव तत्पादप्रतिमासु तच्चरणपद्धतिषु निवेशितपदस्य दत्तपादस्य । तत्र चात्यन्तानुरागवशादुद्भूतरोमोद्गतेज /तरोमाञ्चस्य । अत एव प्रसादो राधयापि कृत । मत्पदसवन्धादेवाय भावाविर्भाववान्नितरा मत्सगमादिति मयि परमयमनुरक्त इति सप्रसाद कुपितयापि कान्तया दृष्ट इति भाव । 'तोयोत्थित तु पुलिनम्' इत्यमर । 'रासो विदग्धगोष्ठ्यां च क्रीडायामपि गोदुहाम्' इति विश्व' । अत्र प्रथमार्धेन द्रौपद्या कोपरोदने सूचिते । उत्तरार्धेन च दुर्योधनवधानन्तर भीमकृततदीयानुनयस्याक्षुण्णता तस्याश्च प्रसादवत्त्व सूचितम् ॥ २ ॥

यत्र विवक्षितार्थस्यापर्यवसानादवशिष्टस्य कथन तत्र 'अपि च' इति शब्द प्रयुज्यत इति व्युत्पत्ति । एवमन्यत्रापि । कवेर्हरिहरनिमग्नमानसत्वेन हरौ स्तुतिमुक्त्वा हरे तामाह— **दृष्ट इति** । धूर्जटि शिवो युष्मान्पातु रक्षतु । कीदृश । मयपुरदहने त्रिपुरदाहे सप्रेम प्रीतिसहित यथा स्यादेव देव्या भवान्या दृष्ट । धन्याह यद्वल्लभेनायमतिबलो महासुरो निषूदित इति प्रीतिमत्या भगवत्या दृष्ट इति भाव । तदैवासुरीभिरसुरवधूभिः किमिदमापतितमिति कृत्वा भयात्त्रासात्सभ्रमादुद्वेगाच्च दृष्ट । आ कष्ट कथमीदृशस्याप्यसुरराजस्याय दशापरिपाक इति मत्स्वामिनामप्येव कदाचित्स्यादिति भीतिरुद्वेगश्च ताभि कृत इति भाव । ऋषिभिर्वशिष्ठादिभि सकरुण दयान्वित यथा स्यादेवं दृष्ट । अहह कथमय वराको जगदीशेन हरेण समूलमुन्मूलित इति तेषां दया । अत्रोपपत्तिमाह—शान्तेति । शान्तमुपशमवद्यदभ्यन्तरं तेन तत्त्वमनारोपितरूपं सारो बल येषां तै । शान्तमानसे रिपुनाशेऽपि करुणा युज्यत एव । सस्मितेन हास्यवता विष्णुना नारायणेन दृष्ट । यदयमधिकबलोऽसुरराजो हरेण ध्वस्तस्तन्मम दैत्यारेर्भारलाघवमेव जातमित्युत्साह एव हासहेतु' । सगर्वैरहकारान्वितैर्दैत्यवीरैर्दृष्ट' । गर्वे हेतुमाह— अस्त्रमाकृष्य कोदण्डादिकमुद्यम्योपशमितवधूसभ्रमै शान्तनिजकान्तोद्वेगै' । आ' क इह मदस्त्रप्रभावाद्विपक्षपक्षप्रसर इति मा भैषीरिति निजवधूमनुद्विग्नमानसा कुर्वाणैरिति भाव' । देवताभिरिन्द्रादिभिः सानन्द सहर्ष दृष्ट । अत्र प्रबलारातिवध एवानन्दहेतु' । सर्वत्र मयपुरदहन इत्यन्वीयते । 'सभ्रमोऽत्र यमिच्छ-

---

१. 'सभ्रमादासुरीभि.' इति पाठ'. २ 'शान्तोऽन्तस्तत्त्वसारैः.' ३. 'सस्मित च.'

आकृष्यास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिप्रसङ्गेन।

श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥ ४ ॥

---

न्ति भयमुद्वेगकारणम्' इत्यमर. । असुरीत्यत्र 'पुयोगादाख्यायाम्' इति ङीष्। मयो नाम दैत्यशिल्पी। तेन रचित पुर मयपुरम् । 'धूर्जटिर्नीललोहित' इत्यमरः। भारतसङ्ग्रामोऽपि देव्या द्रौपद्या पूर्ववैरात्सप्रेम दृष्ट । असुरीभिरिवासुरीभिर्दुर्योधनादिवधूभिर्भयोद्वेगाभ्या दृष्ट । कारुणिकैर्नारदादिभि सदय दृष्ट। कृष्णेन हसता दृष्ट । दैत्यवीरैर्घटोत्कचादिभिः सगर्व दृष्ट। सानन्दमिन्द्रादिभिश्च दृष्ट इत्यपि कविना कटाक्षितमिति वदन्ति । अत एव पत्रावलीरूपा नान्दीयम्। तदुक्त तत्रैव—'वाच्यार्थबीजरचिता शकरादिपदान्विता। सयुक्ता चन्द्रपद्माभ्यां पत्रावल्यभिधीयते॥' इति ॥ ३ ॥ **नान्द्यन्त इति**। नन्विदमसगतम्। नहि नान्दीपाठानन्तर सूत्रधारो रङ्गभूमि प्रविशति। किंतु प्रविश्य पठति। न चान्येनैव नान्दी पठनीया । सूत्रधारपठनीयत्वेन तस्या उक्तत्वात्। 'सूत्रधार पठेदेनां मध्यमं स्वरमाश्रित' इति वचनात्। उच्यते—नान्दी तावद्रङ्गप्रवेशानन्तर सूत्रधारेणैव पठनीया। नान्द्यन्ते सूत्रधार इति सूत्रधारसाम्यात्स्थापके प्रयोग । तदुक्त तत्रैव—'नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधार सहानु-

---

१. 'आदायास्त्र,' 'आदृष्ट शीघ्रमुच्चैः शमितनिजवधूसभ्रमैः' इत्यपि क्वचित्पाठः.

२. पाठान्तरे नान्दी—

जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीज ।
दामोदरो निजोदरगह्वरनिक्षिप्तजगदण्डः ॥ १ ॥ (१. 'निविष्ट')
जयति स भगवान्कृष्ण. शेते यः शेषभोगशय्यायाम्।
मध्येपयः पयोधेरपर इवाम्भोनिधिः कृष्णः ॥ २ ॥

अपि च।

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीत वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ३ ॥

३. 'अलमतिविस्तरेण.' ४. 'अतृष्णम्.'

[1](समन्तादवलोक्य।) [2]तत्रभवतः परिषदग्रेसरान्विज्ञाप्यं नः किंचिदस्ति।

कुसुमाञ्जलिरपर इव प्रकीर्यते काव्यबन्ध एषोऽत्र ।
मधुलिह इव मधुबिन्दून्विरलानपि भजत गुणलेशान् ॥ ५ ॥

---

ग । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥' इति । अत एव कुत्रचित्पुस्तके 'नान्द्यन्ते स्थापकः' इत्येव पाठः । केचित्तु—नावश्यं नान्दी सूत्रधारेण पठनीया । किंतु मङ्गलार्था येनकेनचित्पठ्यते । सूत्रधारश्च रङ्गपूजार्थं प्रविष्ट इति स एव पठति । तदुक्तम्—'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ॥' इत्याहुः । तन्न । 'सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः' इति भरतविरोधात् । तत्र सूत्रधारस्योपलक्षणत्वे प्रमाणाभावात् । अन्ये तु—नान्द्यवसाने सूत्रधारः प्रविशति वदति वा । तदन्ते सूत्रधारस्यैव श्रुतत्वात्सापि तेनैव पठनीया । प्रथमं च सूत्रधार इति नोक्तम् । मङ्गलार्थं देवतानमस्कारादेरेव विधानादित्यूचुः । ननु प्रस्तावनायाः पूर्वं बहूनि नाट्याङ्गानि सन्ति तानि किमिति नोक्तानि । तदुक्तं तत्रैव— 'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः । सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् ॥ स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ।' अत आह—**अलमिति**। अयमाशयः — पूर्वोक्तान्यङ्गानि न भवन्ति । किंतु परिषदोऽभिमुखीकरणानि । सा चेत्स्वयमेव कृतावधाना नवनाटकदर्शनोत्सुका च तत्रान्यत्प्रयुज्यमानं रसभङ्गाय भवेदिति कृतं तत्प्रणयनेन । अन्यथा तस्या रसविच्छेदः स्यादिति । इदानीं व्यासप्रशंसामाह—**श्रवणेति ।** तं कृष्णद्वैपायनं व्यासमहं वन्दे नमस्करोमि। यत्तदोर्नित्याभिसंबन्धादाह—यो भारतनामकममृतं विरचितवानकरोत् । आप्यायनादिकर्तृत्वेनामृतत्वं भारतस्य । कीदृशम् । श्रवणं कर्णस्तदेवाञ्जलिपुटं तेन पेयं श्रव्यमथ च पानीयम् । अन्यदप्यमृतमञ्जलिपुटेन पीयते । तं कीदृशम् । अरागं रागशून्यम्। विषयासक्तिहीनमित्यर्थः । अत एवाकृष्णं निष्कलुषम् । तदिह प्रतिपाद्यभारतकथाया आदिकर्ता व्यासस्तत्त्वविच्चेति तत्कीर्तनं शुभकृदेव भवतीति तदेव कृतमिति भावः ॥४॥ तत्रभवतो मान्यान् । परिषदग्रेसरान्सभापुरोगण्यान् । विज्ञाप्य संबोध्यम् । **कुसुमाञ्जलिरिति ।** एष काव्यबन्धोऽपरः कुसुमाञ्जलिरिव प्रकीर्यते विस्तार्यते ।

---

१. 'समन्तादवलोक्य' इति क्वचिन्नास्ति २. 'तद्भवन्तः परिषदग्रेसरा विज्ञाप्य नः किंचिदस्ति,' 'भवन्तः परिषदग्रेसराः विज्ञाप्य न किंचिदस्ति,' 'तत्रभवन्तः परिषदग्रेसराः विज्ञाप्य नः किंचिदस्ति,' 'तत्रभवतः परिषदग्रेसरान्सर्वान्विज्ञापयामि' इति नानापुस्तकेषु नानाविधः पाठः.

[१]तदिदं [२]कवेर्मृगराजलक्ष्मणो भट्टनारायणस्य [३]कृति वेणीसंहारं नाम नाटकं प्रयोक्तुमुद्यता वयम् । [४]तदत्र [५]कविपरिश्रमानुरोधाद्वा उदात्तकथावस्तुगौरवाद्वा [६]नवनाटकदर्शनकुतूहलाद्वा भवद्भिरवधानं दीयमानमभ्यर्थये ।

---

अत्र काव्यबन्धे विरलानपि स्वल्पानपि गुणकणान्भजत गृह्णीत । हे सभ्या इति शेष । यथा मधुकरा कुसुमाञ्जलौ मधुबिन्दून्विरलानपि गृह्णन्ति तथेत्यर्थ । अनेन मदीयनाटके स्वल्पा अपि गुणा गुणिभिर्ग्राह्या इत्यौद्धत्यपरिहारोऽपि कृत इति ध्वनितम्॥५॥मृगराजलक्ष्मण सिंहचिह्नस्य नारायणभट्टस्य । कृतिनाटकशब्दयोरजहल्लिङ्गतया सामानाधिकरण्यम् । वेणीसहारमिति । वेण्या द्रौपदीकेशरचनाविशेषेण हेतुना सहारो विनाशो दु शासनादीना यत्र तत्तथा ।यद्वा । वेण्या सहारो मोक्षण यत्र तत्तथा । भारतानन्तरमिह वेणीमोक्षणकथनात् । नाटकमिति । तदुक्त तत्रैव—'प्रकृतित्वादथान्येषा भूयो रसपरिग्रहात् । सपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ॥ नाटके सूच्यमर्थं तु पञ्चभि प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकै ॥ वृत्तवर्तिष्यमाणानां कथांशानां निदर्शक । सक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजित ॥ तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजित । प्रवेशोऽङ्कद्वयस्यान्त शेषार्थस्योपसूचक ॥' अङ्कद्वयस्यान्तरिति प्रथमेऽङ्के न कर्तव्य इत्यर्थ । 'अन्तर्जवनिकासस्थैश्चूलिकार्थस्य सूचना । अङ्कान्तपात्रैरङ्कास्य छिन्नाङ्कार्थस्य सूचना ॥ अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागत ।एभि ससूचयेत्सूच्य दृश्यमङ्कै प्रदर्शयेत् ॥ दूराध्वान वध युद्ध राज्यदेशादिविप्लवम् । सरोध भोजन स्नान सुरत चानुलेपनम् ॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् । अङ्केनैव निबध्नीयान्नैवाङ्केन कदाचन ॥ नाधिकारिवध क्वापि त्याज्यमावश्यक न च । एकाहाचरितेकार्थमित्थमासन्ननायकम् ॥ पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गम । एवमङ्का प्रकर्तव्या प्रवेशादिपुरस्कृता ॥ पञ्चाङ्कमेतदवर दशाङ्क नाटक वरम् ॥' इति नाटकलक्षण भरतोक्तम् । तत्रैव प्रसङ्गान्नायकनायिकयोर्लक्षणम्—'नेता विनीतो मधुरस्त्यागी दक्ष प्रियवद । रक्तलोक शुचिर्वाग्मी रूढवश स्थिरो युवा ॥ धृत्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः । शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिक ॥ विनय. शीलसंपत्तिर्मधुर प्रियदर्शन । त्याग. सर्वस्वदान स्याद्दक्ष क्षिप्रकरो मत ॥ प्रियवदोऽनुत्कटवाक्सस्नेहो लोकरञ्जन । मितप्रशस्तवाग्वाग्मी नित्यकर्मरत शुचि ॥ ख्यातवशो रूढवशः षोडशात्त्रिंशको यु-

---

१. 'यदिदम्'. २. 'रसकवे.' ३. 'कृति,' 'अभिनवकृतिम्.' ४. 'तत्र च.' ५. 'कविपरिश्रमानुरोधादुदात्तकथावस्तुगौरवान्नवनाटकदर्शनकुतूहलाच्च' इति पाठान्तरम्. ६. 'नवनाटककुतूहलात्.'

(नेपथ्ये ।)

भाव, त्वर्यतां त्वर्यताम् । एते खल्वार्यविदुराज्ञया पुरुषाः संकल-

वा । वाङ्मन कर्मभिर्यश्च न चल स स्थिरो मत ॥ धृति सर्वेषु या प्रीतिरुत्साहोऽग्लानिरेव च । स्मृति. कालान्तरे ज्ञान प्रज्ञा तीक्ष्णमतिर्मता ॥ कलाश्चात्र चतु -षष्टिर्मानश्चित्तसमुन्नति । शूर सङ्ग्रामनिपुणो रूपवान्दृश्य उच्यते ॥ अतिप्रताप-स्तेजस्वी शास्त्रचक्षुस्त्रयीपर । आत्मवत्परभूतानि य पश्यति स धार्मिक ॥ प्र-ख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायक । तत्प्रख्यात विधातव्य वृत्तमत्राधि-कारिकम् ॥' अयमर्थ —नाटके भारतादिप्रसिद्धो राजर्षिर्दिव्यो वा नायक· कर्तव्यो न तु कविना स्वयमुत्पाद्य कथा कल्पितो नायक कर्तव्य इति । 'स्वा-न्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा । स्वकीया तत्र वक्तव्या मुग्धा म-ध्या प्रगल्भिता ॥ शीलार्जवादिसयुक्ताकुटिला च पतिव्रता । लज्जावती चाप-रुषा निपुणा च प्रियवदा ॥ साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् । रूप-केषु च रक्तैव कर्तव्या प्रहस विना ॥ अन्यस्त्री द्विविधा प्रोक्ता कन्यकोढा तथा-परा । रसे प्रधाने कर्तव्या नान्योढा नाट्यवेदिभि ॥ कन्यानुरागमिच्छात कुर्या-दङ्गादिसश्रयम् ॥' इति । 'नाटके वृत्तय प्रोक्ताश्चतस्रो नाट्यवेदिभि । भा-रती कैशिकी चैव सात्वत्यारभटी तथा ॥' तत्र श्रृङ्गारी कामकलावच्छिन्नो व्यापा-र कैशिकी । 'विशोका सात्वती सत्वशौर्यत्यागार्जवै पुन । मायेन्द्रजालसङ्ग्रा-मक्रोधोद्भ्रान्तादिचेष्टितै । भवेदारभटी नाम नाट्ये तिस्रस्तु वृत्तय ॥ भारती शब्दवृत्ति. स्याद्रसे रौद्रे च युज्यते । श्रृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुन ॥ एवमङ्गानि कार्याणि प्रधानस्याविरोधत । आदौ विष्कम्भक कुर्यादङ्क वा कार्ययु-क्तित· ॥ अपेक्षित परित्यज्य नीरस वस्तुविस्तरम् । यदा सदर्शयेच्छेष कुर्या-द्विष्कम्भक तदा ॥ यदा तु सरस वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्क स्या-दामुखाक्षेपसश्रय. ॥ प्रत्यक्षनेतृचरितो बिन्दुव्यापिपुर सर· । अङ्को नानाप्र-कारार्थसविधानरसाश्रय ॥ अनुभावविभावाभ्या स्थायिना व्यभिचारिभि । गृ-हीतमुक्तै कर्तव्यमङ्गिन. परिपोषणम् ॥ न चातिरसतो वस्तु दूर विच्छिन्नता न-येत् । रस वा न तिरोदध्याद्वस्त्वलकारलक्षणै ॥ एको रसोऽङ्गीकर्तव्यो वीर श्रृङ्गार एव वा । अङ्गमन्ये रसा सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥ श्रृङ्गारहास्यकरुणरौद्रवीर-भयानका. । बीभत्सोऽद्भुत इत्येवमष्टौ नाट्ये रसा स्मृताः ॥' यद्यपि 'अविकार-स्थिति शान्त. शान्तस्तु नवमो रस ' इत्यस्ति, तथापि न स सर्वसमतो न नाट्य-विषयश्चेति न पृथगुक्त. । स्थायिभावाभावादस्य नाट्यविषयता न सभवतीति । उदात्त हृद्यम् । कथावस्तु कथाप्रधान नायक । तस्य गौरवादाह्लादात् ॥ नेप-थ्य रङ्गभूमि. । 'नेपथ्य रङ्गभूमौ स्यान्नेपथ्य तु प्रसाधने' इति विश्व. । भावो

१. 'सर्वमेव.'

मेव शैलूषजन व्याहरन्ति—‘प्रवर्त्यन्ताम[१]परिहीयमानमातोद्यविन्यासादिका विधयः । प्रवेशकाल. किल [२]तत्रभगवत· [३]पाराशर्यनारदतुम्बरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहित[३]काम्यया [४]स्वयं [५]प्रतिपन्नदौत्यस्य देवकीसूनोश्चक्रपाणेर्महाराजदुर्योधन[६]शिबिरसंनिवेशं प्रति प्रस्थातुकामस्य’ इति ।

**सूत्रधारः**—(आकर्ण्य । सानन्दम् ।) अहो नु खलु [७]भोः, भगवता [८]सकलजगत्प्रभवस्थितिनिरोधप्रभविष्णुना विष्णुनाद्यानुगृहीतमिदं भरतकुलं सकलं च [९]राजचक्रमनयोः कुरुपाण्डवराजपुत्रयोराहवकल्पान्तानल[१०]प्रशमहेतुना [११]स्वयं संधिकारिणा कंसारिणा दूतेन । [१२]तत्किमिति पारिपार्श्विक, नारम्भयसि कुशीलवैः सह [१३]संगीतकमेलकम् ।

---

मान्य· । ‘मान्यो भावेति वक्तव्य’ इत्यमर । खलुशब्दो वाक्यभूषायाम् । आर्यश्चासौ विदुरश्चेति विशेषणसमास । विदुरोऽत्र नायक । तस्याज्ञयादेशेन । शैलूषो नट ।अपरिहीयमानमपरित्यज्यमान यथा स्यादेवम् । विधय प्रकारा प्रवर्त्यन्ताम् । कीदृशा· । आतोद्यविन्यासो वीणादिवादनमादौ येषा ते तथा । ‘चतुर्विधमिद वाद्य वादित्रातोद्यनामकम्’ इत्यमर । किल निश्चये । तुम्बरुर्मुनिविशेष । ‘वृन्दारकौ रूपिमुख्यौ’ इत्यमर । भरतकुल युधिष्ठिरादिवश । काम्या इच्छा । प्रतिपन्नदौत्यस्याङ्गीकृतदूतकर्मण । सूनो पुत्रस्य । ‘सूनु पुत्रकनिष्ठयो’ इति विश्व । शिबिरसनिवेश सैन्यविन्यास । त प्रति प्रवेशकालश्चक्रपाणेरित्यन्वय ॥ ‘अहो नु खलु भो’ इत्यव्ययसमुदायोऽत्याश्चर्याविष्कारे । निरोधो विनाश· । प्रभविष्णुना प्रभुणा । राजचक्र क्षत्रियसघ । आहवो युद्धम् । कल्पान्तानल प्रलयाग्नि । स्वय प्रतिपन्नदौत्येनेत्यन्वय ।

---

१. ‘अपरिहीयमानम्’ इति क्वचिन्नास्ति. २. ‘तत्रभवत .’ ३ ‘काङ्क्षया.’ ४. ‘स्वयम्’ इति क्वचिन्नास्ति. ५. ‘प्रतिपन्नदूत्यस्य ’ ६ ‘शिबिर प्रति ’ ७. ‘भो.’ इति क्वचिन्नास्ति. ८ ‘जगदुत्पत्तिस्थिति;’ ‘जगत्प्रभवस्थिति ’ ९. ‘राजकम्’, ‘राजन्यकम्.’ १०.‘प्रशमनहेतुना अनेन.’ ११. ‘स्वय प्रतिपन्नदौत्येन सधिकारिणा’ इत्यपि पाठ.. १२. ‘तत्किमिति’,इत्येतस्मात्पूर्व ‘(नेपथ्ये ।)’ इत्यधिक क्वचित्. १३. ‘सगीतकम्’.

(प्रविश्य ।)

**पारिपार्श्विकः**—भवतु । आरम्भयामि । [1]कतमं समयमाश्रित्य [2]गीयताम् ।

**सूत्रधारः**—नन्वमुमेव तावच्चन्द्रातपनक्षत्र[3]ग्रहक्रौञ्चहंससप्तच्छदकुमुदको[4]कनदकाशकुसुमपरागधवलितदि[5]ङ्मण्डलं स्वादुजलजलाशय शरत्समयमाश्रित्य प्रवर्त्यतां संगीतकम् । तथा ह्यस्यां शरदि

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ ६ ॥

**पारिपार्श्विकः**—(ससंभ्रमम् ।) भाव, शान्तं पापम् । प्रतिहतममङ्गलम् ।

---

कंसारिः कृष्णः । पारिपार्श्विक इति । 'सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह । काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः ॥' इति भरतः । कुशीलवो नटः । 'भरतास्तु कुशीलवाः' इत्यमरः । सगीतकमेलकम् । ऐक्यमिति यावत् ॥ नक्षत्रमश्विन्यादि । ग्रहाः सूर्यादयः । क्रौञ्चः 'हकूह' इति प्रसिद्धः पक्षी । सप्तच्छदः 'तिमन' इति प्रसिद्धो वृक्षः । 'रक्तोत्पलं कोकनदम्' इत्यमरः । 'तथा हि' इत्ययं शब्द उक्तविभावनार्थः । 'श्लेषच्छायोपशेषैश्च समुद्दिष्टं विसर्पति । यत्फलोदयपर्यन्तं तद्बीजमिति कीर्तितम् ॥' इति भरतात् । श्लेषेण बीजमाह—**सत्पक्षा इति** । धार्तराष्ट्रा हंसविशेषाः । कालवशाच्छरन्माहात्म्यान्मेदिनीपृष्ठे निपतन्ति । मानसं सरः परिहृत्यायान्तीत्यर्थः । अथ च धार्तराष्ट्रा धृतराष्ट्रपुत्रा दुर्योधनादयो भूमौ पतन्तीत्यर्थः । कीदृशाः । सत्पक्षाः श्रेष्ठपक्षयुक्ताः श्रेष्ठसैन्यवन्तश्च । मधुरगिरो मधुरवाणीकाः । प्रसाधिता आशा दिशो यैस्ते तथा । पक्षे प्रकर्षेण साधिता आयत्तीकृता आशा दिशः प्रत्याशा वा यैस्ते तथा । मदोद्धता आरम्भा येषां ते । मदो हर्षोऽहंकारश्च । 'धार्तराष्ट्राः सितेतरैः' इत्यमरः ॥ ६ ॥ इह श्लोके प्रवर्तकरूपा प्रस्तावना । यदुक्तं तत्रैव—'प्रवृत्तकालमाश्रित्य वर्णना या विधीयते । तदाश्रयस्य पात्रस्य प्रवेशेन प्रवर्तकम् ॥' इति । आर्याच्छन्दः । यत्र पटाक्षेपेण पात्रप्रवेशस्तत्र प्रविश्येति प्रयुज्यते ॥ 'शान्तं पा-

---

१. 'कम्' २. 'सगीतकमारम्भयामि' इति पाठान्तरम्. ३. 'ग्रह' इति क्वचिन्नास्ति. ४. 'कोकनद' इत्येतस्य स्थाने 'पुण्डरीक' इति पाठः क्वचिद्दृश्यते. ५. 'गगनदिङ्मण्डलम्.'

**सूत्रधारः**— (सवैलक्ष्यस्मितम् ।) मारिष, शरत्समयवर्णनाशंसया [1]हंसा धार्तराष्ट्रा इति व्यपदिश्यन्ते[2] ।

**पारिपार्श्विकः**—न[3] खलु न जाने । कित्वमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयम् ।

**सूत्रधारः**—मारिष, ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयं प्रतिपन्नदौत्येन[4] संधिकारिणा कंसारिणा । तथा हि ।

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ७ ॥

---

पमनाकाङ्क्षे' इति भरतः । तथा च न वक्तव्यमित्यर्थः ॥ सवैलक्ष्यं सलज्जम् । 'किंचिन्न्यूनस्तु मारिषः' इत्यमरः । मारिष एव मर्षणान्मार्ष इति । 'मार्षो मारिष इत्यपि' इति शब्दभेदः ॥ न खलु न जाने किंतु जानाम्येव । खलुशब्दो निषेधे । 'अलंखल्वोः प्रतिषेध–' इति सूत्रम् । वो युष्माकम् । 'यत्सत्यमसंभाव्येऽर्थे' इति भरतः । तथा च यत्सत्यम् । असंभावनीयमिदमित्यर्थः ॥ **निर्वाणेति** । निर्वाणो निस्तेजीकृतो वैरमेव दहनो यैस्ते तथा । प्रशमादुपशमात् । विनाशादिति यावत् । रक्तेभ्यः सानुरागेभ्यः प्रसाधिता दत्ता भूर्यैस्ते तथा । अथ च रक्तेन रुधिरेण प्रसाधितालंकृता भूर्यैस्ते तथा । विग्रहो युद्धं शरीरं वा । स्वस्थाः सुस्थिता मृताश्च । 'विग्रहः समराङ्गयोः' इति धरणिः । 'सुस्थिते च मृते स्वस्थः'

---

१. 'हसान्धार्तराष्ट्रानिति व्यपदिशामि न धृतराष्ट्रसुतान्' इति भिन्नः पाठः. २. एतदनन्तरम् 'तत्किं शान्तं पापं प्रतिहतममङ्गलम्,' अथवा, 'ननु राजपुत्रास्तत्किं प्रलपसि शान्तं पापं प्रतिहतममङ्गलमिति' इत्यधिकं क्वचित्. ३ 'भाव, न खलु न जाने । कित्वमङ्गलत्वादस्य वचसो यत्सत्यं प्रकम्पितमिव हे हृदयम्,' अथवा, 'न खलु जाने । अमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयम्,' अथवा, 'भवतु न जाने । अमङ्गलाशंसयास्य वो वचनस्य कम्पितमिव मे हृदयम्,' अथवा, 'भवतु न जाने । कित्वमङ्गलाशंसयास्य वचनस्य कम्पितमिव मे हृदयम्,' अथवा, 'न जाने । अमङ्गलासंशयास्य वो वचनस्य कम्पितमिव मे हृदयम्' इति नानापुस्तकेषु नानाविधः पाठः. ४. 'प्रतिपन्नदौत्येन' इति क्वचिन्नास्ति.

(नेपथ्ये । साधिक्षेपम् ।)

[1]आः दुरात्मन्वृथामङ्गलपाठक शैलूषापसद,
लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वि[2]त्तनिचयेषु च नः प्रहृत्य ।
[3]आकृष्य पाण्डववधूपरिधानकेशा-
न्स्वस्था [4]भवन्ति मयि जीवति धार्तराष्ट्राः ॥ ८ ॥

([5]सूत्रधारपारिपार्श्विकावाकर्णयतः ।)

**पारिपार्श्विकः**—[6]भाव, कुत एतत् ।

**सूत्रधारः**—([7]पृष्ठतो विलोक्य ।) अये, [8]कथमयं वासुदेवगमना-त्कुरुसंधानममृष्यमाणः पृथुललाटतटघटितवि[9]कटभ्रुकुटिना दृष्टिपातेना-पिबन्निव नः सर्वान्सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिव-

---

इति विश्वः ॥ ७ ॥ लेशगण्डोऽयम् । यदुक्तं तत्रैव—'ध्यर्थेना यत्र वाक्याना लेशेनापि प्रतीयते। यः शब्दभङ्गीगतो लेशगण्डः स उच्यते ॥' आः शब्द आक्षेपे। शैलूषो नटः । अपसदोऽधमः । **लाक्षेति ।** जतुगृहाग्निविषलड्डुककपटद्यूतादि-भिरस्मान्वित्तादिषु प्रहृत्येत्यन्वयः । पाण्डववधूर्द्रौपदी । परिधानं परिधानीयव-स्त्रम् ॥८॥ इहावसाने विद्धकम् । यदुक्तं तत्रैव—'नाटकीयफले हेतुभूतस्याध्य-क्षकीर्तनम् । आफलोदयमुत्साहावसानाभ्यां तद्धि विद्धकम् ॥' अये इति निपातो-ऽव्यासङ्गादिनानाकलितस्याकलने सभ्रमाभिधायी । 'अये चित्रेऽवधारणे' इति भरतः । कुटिलभ्रूभागो भ्रुकुटिः । नोऽस्मात् । दृष्टिपातेनालोकितेन । पृथुल-लाटेत्याद्यस्यैव विशेषणम् । इत एवाभिवर्तत इहैव तिष्ठति ॥ निष्क्रान्तौ सूत्र-धारपारिपार्श्विकौ ॥ **प्रस्तावनेति ।** प्रस्तावनामुखसंधिपर्यायः । यदुक्तं तत्रैव—'सूत्रधारेण सहिता सलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्विक एव वा ॥ आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥' इति । इयं प्रस्तावना वा-

---

१. 'आः पाप दुरात्मन्' इति केचित्. २ 'वित्तनिवहेषु.' ३ 'आकृ-ष्टपाण्डववधूपरिधानकेशाः' इत्यपि पाठः. ४. 'भवन्तु.' ५. 'सूत्रधारपारिपार्श्विकौ—(आकर्ण्य ।),' अथवा, 'सूत्रधारः—(आकर्ण्य सभयं नेपथ्याभिमुखमवलोक्य ।)' इति पाठान्तरे. ६. 'आः कुतएतत्' इत्यपि पाठः. ७. '(पृष्ठतोऽवलोक्य, सभयम् ।)' इत्यपि पाठः. ८ 'एष खलु' इति पाठान्तरम्. ९. 'विकटकीनाशतोरणत्रिशूला-यमानभीषणभ्रुकुटिरापिबन्निव नः सर्वान्दृष्टिपातेन' इति क्वचिदधिकः पाठः.

र्तते । तन्न युक्तमस्य पुरतः स्थातुम् । [1]तदित आवामन्यत्र गच्छावः ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

(तत प्रविशति सहदेवेनानुगम्यमान क्रुद्धो भीमसेन. ।)

**भीमसेनः**—[2]आः दुरात्मन्वृथामङ्गलपाठक शैलूषापसद ।

([3]'लाक्षागृहानल–'(१।८) इत्यादि पुन पठति ।)

**सहदेवः**—(सानुनयम् ।) आर्य, मर्षय मर्षय । अनुमतमेव नो भरतपुत्रस्यास्यवचनम् । पश्य । ([4]'निर्वाणवैरदहना '(१।७) इति पठित्वान्यथाभिनयति ।)

**भीमसेनः**—([5]सोपालम्भम् ।) न खलु न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणाम् । [6]संधेयास्ते भ्रातरो युष्माकम् ।

**सहदेवः**—(सरोषम् ।) आर्य,

धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
राजा न चेन्निषेद्धा स्यात्कः क्षमेत तवानुजः ॥ ९ ॥

**भीमसेनः**—[7]एवमिदम् । अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः । पश्य ।

---

क्यार्थकथोद्घातरूपा । 'सूत्रधारस्य वाक्य वा यत्र वाक्यार्थमेव वा । गृहीत्वा प्रविशेत्पात्र कथोद्घात' स उच्यते ॥' इति भरत ॥ प्रविशतीति । सर्वत्र प्रवेशे पूर्वसूचितस्यान्वय । 'नासूचितस्य पात्रस्य प्रवेश' इति भरतवचनात् ॥ मर्षय क्षमस्व । भरतपुत्रस्य नटस्य । अन्यथा मरणार्थतया ॥ सोपालम्भ विसवादसहितम् । वीप्सितो न खलुशब्दोऽत्यन्तनिषेधवचन ॥ **धृतराष्ट्रस्येति** । पदे पदे । प्रतिस्थानमित्यर्थ । चेच्छब्दो यद्यर्थे । निषेद्धा नि-

---

१. 'तदित आवाम्' इत्यादि क्वचिन्न वर्तते. २. 'आः पाप दुरात्मन्' इति क्वचित्पाठ.. ३. ''लाक्षागृहानल' इति पूर्वोक्त पठति' इति पाठान्तरम्. ४. 'निर्वाणवैरदहना.' इति पठित्वा अन्यथाभिनयति' इत्येतस्य स्थाने 'निर्वाणवैरदहना इति यथार्थमेव । सम्भृत्याः कुरव. क्षतजालकृतवसुधराः क्षतशरीराश्च स्वर्गस्था भवन्त्विति ब्रवीति' इति पाठान्तर बहुषु पुस्तकेषु दृश्यते. ५. 'सावेगम्' इति क्वचित्पाठ ६. 'यत: संधेयास्ते भ्रातरो युष्माकम्,' 'संधेयाश्च ते भ्रातरो युष्माकम्' इति पाठान्तरे. ७. 'भीमसेन:—(सरोषम् ।) एवमिदम्' इति क्वचित्पाठः.

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासंधस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा संधिं भीमो विघटयति यूयं [1]घटयत ॥ १० ॥

[2]सहदेवः— (सानुनयम् ।) आर्य, एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ।

[3]भीमसेनः— किं नाम कदाचित्खिद्यते गुरुः । गुरुः खेदमपि जानाति । पश्य ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि [4]भजति नाद्यापि कुरुषु ॥ ११ ॥

---

येधक ॥ ९ ॥ इह श्लोके यद्यपि वाक्ये गर्भितनामालङ्कारदोषस्तथापि रसान्तरद्योतनाय तद्वाक्यमिति न दोषकक्षामवगाहत इत्यवधेयम् ॥ इह 'अह भिन्नो भवद्भ्य' इत्यनेन भेदसंधि । यदाह—'भेदस्तु भिन्नता' इति । प्रभृतिशब्द आरम्भपर्याय ॥ **प्रवृद्धमिति** । प्रवृद्धमुपचितम् । खलु निश्चये । कुरुभिरिति सहार्थे तृतीया । आर्यो राजा । किरीटी अर्जुन । युवां नकुलसहदेवौ न हेतू भवत । विरूढ जात स्मृत च । 'संधिर्ना संघटनके संधानेऽपि च कथ्यते' इति विश्व ॥ १० ॥ **तथाभूतामिति** । तथाभूतां ऋतुमतीं नग्नां च । पाञ्चालतनया द्रौपदीम् । वने उषितमस्माभिर्वास कृत । तद्दृष्ट्वेत्यन्वय । स्थितमवस्थान कृतम् । तद्दृष्ट्वेत्यन्वय । अनुचितारम्भा कन्यालंकरणादिकास्तैर्निभृत गुप्त यथा स्यादेवम् । मयि खिन्ने सति गुरुरद्यापि कुरुषु खेद न वहतीत्यन्वयः ॥ ११ ॥

---

१. 'च कुरुत' इति पाठान्तरम्. २. 'सहदेवः—एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरु.' एवंविधः पाठ कचित्. ३. 'भीमसेन.— (सहासम् ।) किं नाम मयि खिद्यते गुरुः । (सामर्षम् ।) गुरु. खेदमपि जानाति'; अथवा 'भीमसेन.—किं नाम मयि खिद्यते गुरु । वत्स, गुरु खेदमपि जानाति'; अथवा 'भीमसेन — (सबाष्पक्रोधम् ।) किं नाम कदाचित्खिद्यते गुरु । (सामर्षम् ।) वत्स, गुरु खेदमपि जानाति'; अथवा 'भीमसेन.— (सहासम् ।) किं किम्, गुरुः खेदमपि जानाति' इति नानापुस्तकेषु नानाविधः पाठः. ४. 'वहति'.

न्तसहदेव, निवर्तस्व। एवं चापि चिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम्।

**सहदेवः**—आर्य, किमिति।

**भीमसेनः**—

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमता मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव॥ १२॥

(इत्युद्धत परिक्रामति।)

**सहदेवः**— (तमेवानुगच्छन्नात्मगतम्।) अये, कथमार्यः पाञ्चाल्याश्चतुःशालकं प्रति प्रस्थितः। भवतु तावदहमत्रैव तिष्ठामि। (इति स्थित।)

**भीमसेनः**— (प्रतिनिवृत्यावलोक्य च।) सहदेव, गच्छ त्वं गुरुमनुवर्तस्व। अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि।

**सहदेवः**—आर्य, नेदमायुधागारम्, पाञ्चाल्याश्चतुःशालकमिदम्।

**भीमसेनः**—(सवितर्कम्।) किं नाम नेदमायुधागारम्, पाञ्चा-

---

**युष्मदिति**। अहसि पापे। नाम प्राकाश्ये। 'नाम प्राकाश्यसभाव्योपगमे कुत्सने तथा' इति विश्व। विगर्हणा निन्दा। स्थितिमता धैर्यवताम्। क्रोधेनोल्लासिता समुत्तोलिता शोणितेनारुणा रक्ता गदा यस्य। उच्छिन्दतो नाशयत। दिवस व्याप्य। 'कालाध्वनोरत्यन्तसयोगे' इति द्वितीया। अद्येदानीम्। 'इदानीमद्य' इति कलापसूत्रम्। अस्मिन्नहनीत्यर्थेऽनन्वय स्यादित्यवधेयम्॥ १२॥ इह परिकररूप सधि। यदुक्तं तत्रैव—'कार्याकार्यस्य हेतूनामुक्ति परिकरो मतः' इति॥ चतु शालक 'चउसार' इति प्रसिद्धगृहम्॥ आगारो गृहम्। आयुधसहा-

---

१. 'चातिचिरप्रवृद्धामर्षोद्दीपितस्य' इति पाठान्तरम्. २. 'आर्य, किं विज्ञापयामि' इति पाठान्तरम् ३ 'लङ्घनाम्भसि' ४. 'क्रोधोच्छासित;' 'हेलोल्लासित' ५. 'इति साटोप परिक्रामति', 'इत्युक्त्वा परिक्रामति'. ६. 'प्रविष्ट'. ७ 'परानिवृत्य' ८. 'सहदेव'—आर्य, नेदमायुधागारम्। भीम —किं तर्हि। सहदेवः—पाञ्चाल्याश्चतु शालकमिदम्' इत्यपि क्वचित्पाठः. ९. 'सवितर्कम्' इति क्वचिन्नास्ति.

ल्याश्चतुःशालकमिदम्। (विचिन्त्य, सहर्षम्।) आमन्त्रयितव्यैवं मया पाञ्चाली[3]। (सप्रणय सहदेव हस्ते गृहीत्वा।) वत्स, आगम्यताम्। यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु।

(उभौ प्रवेशं नाटयतः। भीमसेन सक्रोध भूमावुपविशति।)

**सहदेवः**—(ससंभ्रमम्।) आर्य, इदमासनमास्तीर्णम्। अत्रोपविश्यार्यः पालयतु कृष्णागमनम्।

**भीमसेनः**—(उपविश्य स्मृत्वा।) वत्स, कृष्णागमनमित्यनेनोपोद्घातेन स्मृतम्। अथ भगवान्कृष्णः केन पणेन संधिं कर्तुं सुयोधनं प्रति प्रहितः।

**सहदेवः**—आर्य, पञ्चभिर्ग्रामैः।

**भीमसेनः**—(कर्णौ पिधाय।) अहह, देवस्याजातशत्रोरप्ययमी-

---

योऽस्त्वद्वितीय ॥ आ स्वीकारे। आमन्त्रयितव्या संवदनीया ॥ कृष्णागमनं द्रौपद्यागमनमथ च हरेरागमनम् ॥ उपोद्घात उक्तिः। तदुक्तममरे—'उपोद्घात उदाहारः' इति। यद्वा प्रकृतानुकूलिनी चिन्ता उपोद्घातः। भगवानैश्वर्यादिमान्। इह श्रीकृष्णो निगूढार्थो दूतः। यदुक्तं तत्रैव—'उद्देश्यकार्यावाधने विपक्षे नायके स्वयम्। वाग्युद्धनिरतो यस्तु स निगूढार्थ उच्यते ॥' इति। पञ्चग्रामदानादानेन तयोस्तेन वैरप्रकाशनात्। 'अहहेत्यद्भुते खेदे'

---

१. '(किंचिद्विहस्य।)' इति पाठान्तरम्. २ 'एव' इति क्वचिन्नास्ति ३ एतदनन्तरं केचित् '(सहदेव हस्ते गृहीत्वा।) वत्स, यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति। पश्यतु। उभौ—(प्रवेशं नाटयतः।) सहदेव —आर्य, इदमासनमास्तीर्णम्। अत्रोपविशत्वार्यः। पालयतु कृष्णागमनम्' इति पठन्ति, अन्ये च '(सप्रणय सहदेव हस्ते गृहीत्वा।) वत्स, आगम्यताम्। सहदेव —यदादिशत्यार्यः। भीमसेनः—वत्स, यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु। (परिक्रम्य उभौ गृहप्रवेशं नाटयतः। भीमः सक्रोधं भूमावुपविशति।) सहदेवः—(ससंभ्रमम्।) आर्य, इदमासनमास्तीर्णम्। अत्रोपविश्यार्यः पालयतु कृष्णागमनम्।' इति. ४. 'अत्रोपविश्य मुहूर्तमार्यः' इति पाठः. ५ '(उपविश्य स्मृत्वा।)' इति क्वचिन्नास्ति. ६. 'कथोद्घातेन'. ७. 'तत्स्मृतम्'. ८. 'प्रकारेण'. ९. 'प्रेषितः'. १०. 'अहह, हन्त, देवस्य'; 'अहह, कथं तस्य देवस्य.'

दृशस्तेजोपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम् । (परिवृत्य स्थित्वा ।)
तद्वत्स, न[1] त्वया कथितं न च मया भीमेन श्रुतम् ।

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपते. ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥ १३ ॥

(नेपथ्ये ।)

समस्ससदु[2] समस्ससदु भट्टिणी । (क)

**सहदेवः**—(नेपथ्याभिमुखमवलोक्यात्मगतम्[3] ।) अये, कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलस्थगितनयना[4] आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम् ।

यद्वैद्युतमिव ज्योतिरार्ये[5] क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १४ ॥

(क) समाश्वसितु समाश्वसितु भट्टिनी ।

इत्यमर । यत्सत्य निश्चये । तदुक्त तत्रैव—'यत्सत्यमिति भावार्थम्' ॥ **यत्तदूर्जितमिति ।** ऊर्जित बलवत् । क्षात्रं क्षत्रियसबन्धि । दीव्यताक्षैर्द्यूतेन क्रीडमानेन । 'दिव कर्म च' इति चकारात्तृतीया । नून निश्चये । तदपि तेज ॥१३॥ नेपथ्ये । भट्टिनि, समाश्वसिहि समाश्वसिहि । अपनेष्यति ते मन्यु नित्यानुबद्धकुरुवैर कुमारो भीमसेन । अत्र 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमर ॥ आत्मगतम् । 'यत्तु श्राव्य न सर्वस्य स्वगत तदिहोच्यते' इति भरत । याज्ञसेनी द्रौपदी । अश्रुण पूर्वावस्था वाष्प । स्थगित पिहितम् ॥ **यद्वैद्युतमिति ।** वैद्युत विद्युत्प्रभवम् । आर्ये भीमे । सभृत जातम् । प्रावृड्वर्षाकाल । नून निश्चये । १४ ॥ द्रौपदी । सास्र सनयनजलम् । हञ्जे बुद्धिमतिके, अस्त्येवैतद्यदि महा-

१ 'न मया श्रुत न त्वया कथितम्', 'न त्वया कथित न च भीमसेनेन श्रुतम्'। इति पाठान्तरम् २ 'समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णु णिच्चाणुवद्धकुरुवेरो कुमालो भीमसेणो ।' इति क्वचित्पाठ ३ 'कर्ण दत्वा, नेपथ्याभिमुखमवलोक्य, आत्मगतम्' इत्यपि पाठ ४. 'मुहुर्मुहुरुपचितबाष्पपटलस्थगितनयना आर्यस्य समीप समुपसर्पति। तत्कष्टात्कष्टतरमापतितम्', अथवा 'मुहुरुपचीयमानबाष्पपटलनयना आर्यसमीपमुत्सर्पति । तत्कष्टतरमापतितम्', अथवा 'मुहुरुपचीयमानबाष्पपटलावृतनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम्' इति नानापुस्तकेषु नानाविध. पाठ.. ५. 'आर्यक्रोधेन सभृतम्'.

(ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च ।)

(द्रौपदी सास्रं निश्वसिति[1] ।)

**चेटी**—समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमालो भीमसेणो[2] । (क)

**द्रौपदी**—हञ्जे बुद्धिमदिए, होदि एदं जइ महाराओ[3] पडिउलो ण भवे । ता णाहं पेक्खिदुं तुवरदि मे हिअअं । ता आदेसेहि मे णाहस्स वासभवणं । (ख)

**चेटी**—एदु एदु भट्टिणी । (ग)

(इति परिक्रामतः ।)

**चेटी**—एदं वासभवणं । एत्थ पविसदु भट्टिणी । (घ)

**द्रौपदी**—हञ्जे, कहेहि णाहस्स मह आगमणं । (ङ)

**चेटी**—जं देवी आणवेदि । (इति परिक्रम्योपसृत्य च ।) जअदु जअदु कुमालो । (च)

---

(क) समाश्वसितु समाश्वसितु भट्टिनी । अपनेष्यति ते मन्युं नित्यानुबद्ध-कुरुवैरः कुमारो भीमसेनः ।

(ख) हञ्जे बुद्धिमतिके, भवत्येतद्यदि महाराजः प्रतिकूलो न भवेत् । तन्नाथं प्रेक्षितुं त्वरते मे हृदयम् । तदादेशय मे नाथस्य वासभवनम् ।

(ग) एत्वेतु भट्टिनी ।

(घ) एतद्वासभवनम् । अत्र प्रविशतु भट्टिनी ।

(ङ) हञ्जे, कथय नाथस्य ममागमनम् ।

(च) यद्देव्याज्ञापयति । जयतु जयतु कुमारः ।

---

राज प्रतिकूलो न भवेत् । तन्नाथं प्रेक्षितुं त्वरते मम हृदयम् । तदादेशय मे नाथस्य वासभवनम् । अत्र 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः ॥ एतु भर्तृका । एतद्वासभवनम् । अत्र प्रविशतु भट्टिनी । अत्र एतु आगच्छतु ॥ हञ्जे कथय नाथस्य ममागमनम् ॥ यद्देव्याज्ञापयति । जयतु जयतु

---

१ 'सबाष्पं निश्वसिति' २. एतदनन्तरम्, 'द्रौपदी—हञ्जे, होदि एदं जइ महाराओ पडिउलो ण भवे । चेटी—एसो कुमालो चिट्ठदि । ता ण उवसप्पदु भट्टिणी। द्रौपदी—हञ्जे, एव्वं करेह्म । (उभे परिक्रामतः ।) चेटी—जअदु जअदु कुमालो । भीमः—(अपश्यन्निव 'यत्तदूर्जितम्' इति पुनः पठति ।)' इति पाठो बहुपुस्तकेषु दृश्यते. ३. 'महाराअस्स पडिऊलो हुविस्सदि' इति पाठान्तरम्.

(भीमसेनोऽश्रृण्वन् 'यत्तदूर्जितम्' (१।१३) इति पुन पठति ।)

[1]चेटी—(परिवृत्य।) भट्टिणि, पिअं दे णिवेदेमि। परिकुविदो विअ कुमालो लक्खीअदि। (क)

द्रौपदी—हञ्जे, जइ एव्वं ता अवहीरणावि एसा मं आसासअदि। ता [2]एअन्ते उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं। (ख)

([3]उभे तथा कुरुतः।)

भीमसेनः—([4]सहदेवमधिकृत्य।) किं नाम पञ्चभिर्ग्रामैः संधिः।

मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥ १९ ॥

---

(क) भट्टिनि, प्रिय ते निवेदयामि। परिकुपित इव कुमारो लक्ष्यते।

(ख) हञ्जे, यद्येव तदवधीरणाप्येषा मामाश्वासयति। तदेकान्त उपविष्टा भूत्वा श्रृणोमि तावन्नाथस्य व्यवसितम्।

---

कुमार। भट्टिनि, प्रिय ते निवेदयामि। परिकुपित इव कुमारभीमसेनो लक्ष्यते। अत्र जयत्विलत्र यद्यपि जयतेरनभिधानादुत्व न भवतीति रूपावतारे दृश्यते तथापि तस्य प्रायिकत्वम्। प्राकृते जयदु जयत्विल्यस्याभिधानात्। प्राकृतस्य च 'तद्भवस्तत्समो देशीत्यनेक प्राकृत क्रम' इति नियमात्। सस्कृत क्रमवत्त्वात्। अन्यथा क्रमहान्यापत्ते.। किं च 'जयतात् '....भवानीपति' इत्यादिदर्शनाज्जयत्विति साधु। अन्यथा 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति तातङोऽप्राप्तिः। जयतीत्यत्रोकारस्याकरणादित्यववेयम्॥ हञ्जे यद्येव ततोऽवधीरणाप्येव तस्य मा समाश्वासयति। तदेकान्त उपविष्टा भूत्वा श्रृणुमस्तावन्नाथस्य व्यवसितम्। कोऽन्यो मम परिभवेण खिद्यते। अत्र व्यवसितमध्यवसाय ॥ **मथ्नामीति।**

---

१. 'चेटी—देवि, परिकुविदो विअ कुमालो, लक्खिअदि' इति पुस्तकान्तरस्य पाठः. २ 'एअन्ते' इति क्वचिन्नास्ति. ३. 'इति तथा कुरुत.,' 'तथा कुरुत' ४. '(सक्रोधम्, सहदेवमधिकृत्य।)' इति क्वचित्पाठः.

**द्रौपदी**—([1]सहर्षम्। जनान्तिकम्।) [2]णाह, अस्सुदपुव्वं क्खु दे एदिसं वअणं। ता पुणो पुणो दाव भणाहि। (क)

([3]भीमसेनोऽशृण्वन्नेव 'मथ्नामि कौरवशत-'(१।१५) इति पुनः पठति।)

**सहदेवः**—आर्य, किं महाराजस्य सन्देशो[4]ऽयमार्येणाव्युत्पन्न [5]एव गृहीतः।

**भीमसेनः**—का पुनर[6]त्र व्युत्पत्तिः।

**सहदेवः**—[7]आर्य, एवं [8]गुरुणा संदिष्टम्।

**भीमसेनः**—कस्य।

**सहदेवः**—सुयोधनस्य।

[9]**भीमसेनः**—किमिति।

**सहदेवः**—

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम्।
[10]प्रयच्छ चतुरो ग्रामान्कंचिदेकं च पञ्चमम्॥ १६॥

---

(क) नाथ, अश्रुतपूर्वं खलु ते ईदृशं वचनम्। तत्पुनःपुनस्तावद्भण।

---

'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यति लट्। नकारः सर्वत्र शिरश्चालने। मथ्नामि विमर्दयिष्यामि। उरस्तो वक्षःस्थलात्। पञ्चम्या तसि सप्तम्या वा तसि। पिबामि सचूर्णयामीत्यत्रापि भविष्यति लट्॥ १५॥ इह प्रतिमुखरूपः संधिः। यदुक्तं तत्रैव—'आनुषङ्गिककार्येण क्रियते यत्प्रकाशनम्। नष्टस्येवेह बीजस्य तद्धि प्रतिमुखं मतम्॥' व्यवसायनामा वचनसंधिरयम्। यदाह—'प्रतिज्ञाहेतुसंयुक्तं व्यवसायो वचो मतम्' इति॥ जनान्तिकम्। 'अन्योन्यमन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्' इति भरतः। अश्रुतपूर्वः खल्वीदृश आलापो नाथस्य। तन्नाथ, पुनःपुनस्तावदेव भण। अत्र 'खलु' निश्चये वाक्यभूषायां वा॥ अव्युत्पन्नः पञ्चग्राममात्रम्। इह भाषणरूपो निर्वहणसंधिः। यदुक्तं तत्रैव—'सामवादादिसंपन्नं भाषणं भाषणं मतम्॥' **इन्द्रप्रस्थेति**॥ १६॥ विषभोजनेत्यादौ य-

---

१. 'श्रुत्वा। सहर्षम्' इति पाठः. २ 'णाह, अस्सुदपुव्वं एदिसं वअणं ता पुणोवि भणाहि' इति बहुपुस्तकेषु पाठः. ३. 'भीमः—सहदेव, पश्य। ('मथ्नामि कौरवशत' इत्यादि पुनः पठति।)' इति क्वचित्पाठः. ४. 'अयमार्येण' इति क्वचिन्नास्ति. ५. 'एव'. ६. 'तत्र' ७. 'आर्य' इति क्वचिन्नास्ति ८. 'आर्येण'. ९. 'भीमसेनः—किमिति' इति क्वचिन्नास्ति. १०. 'देहि मे चतुरो ग्रामान्पञ्चमं कंचिदेव तु' इति भिन्नः पाठः.

**भीमसेनः**—ततः किम्।

**सहदेवः**—तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाह[1]द्यूतसभाद्यपकारस्थानोद्घाटनमेवेदं मन्ये[2]।

**भीमसेनः**—(साटोपम्।) वत्स, एवं कृते किं[3] भवति।

**सहदेवः**—आर्य, एवं कृते लोके[4] तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति, कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता भवति।

**भीमसेनः**—मूढ[6], सर्वमप्येतदनर्थकम्। कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता[7] यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातम्[8]। लोकेऽपि च धार्तराष्ट्रकुलक्षय किं लज्जाकरो भवताम्। अपि च रे मूर्ख,

युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणम्॥ १७॥

**द्रौपदी**—(जनान्तिकम्।) णाह, ण लज्जन्ति एदे। तुमं वि दाव मा विसुमरेहि। (क)

---

(क) नाथ, न लज्जन्त एते। त्वमपि तावन्मा विसार्षीः।

---

प्रयोग कुशस्थलेत्यादिसबन्ध। विषभोजनादेस्तत्तत्स्थाने वृत्तत्वात्तत्तत्स्मरणम्॥ अन्यथा मन्यन्ते प्रकारान्तरेण जानन्ति। त इति शेष॥ असंधेयतासंधानविषयता। निधन विनाश॥ **युष्मानिति**। ह्रेपयति लज्जायुक्तान्करोति। 'दारा पुंभूम्नि' इत्यमर'। इह यद्यप्येकैव द्रौपदी बह्वर्थवाचि दारशब्देनायोग्यतया प्रतिपादयितु न शक्यते तथापि लक्षणया तदपि शक्यत इत्यदोष। केशकर्षण कर्तृ॥ १७॥ नाथ न लज्जन्त एते। त्वमपि पुनर्न मां विस्मरसि॥ चिरयति

---

१. 'दाह' इति क्वचिन्नास्ति २ 'मन्यामहे' ३. 'किं कृत भवति' ४ 'लोकेष्वयश स्वगोत्रक्षयाशङ्कि' इति पाठान्तरम्. ५ 'आविष्कृत, कुरुराजस्यासंधेयता च दर्शिता भवति' इति बहुपुस्तकेषु पाठ· ६ 'मूढ' इति क्वचिन्नास्ति ७. 'निवेदिता' ८ एतदनन्तर पुस्तकान्तरे 'प्रसिद्धश्च लोकेऽपि धार्तराष्ट्रकुलक्षय.। (सहदेवो लज्जा नाटयति।) भीम.—किं लज्जाकरो भवताम्। अपि च रे मूर्ख' इति पाठो दृश्यते.

**भीमसेनः**—वत्स[1], कथं चिरयति पाञ्चाली[2] ।

**सहदेवः**—आर्य, का खलु वेलात्रभवत्या[3] प्राप्ताया । किं तु रोषावेशवशादार्यागताप्यार्येण[4] नोपलक्षिता[5] ।

**भीमसेनः**—(दृष्ट्वा[6], सादरम् ।) देवि, वर्धितामर्षैरस्माभिरागतापि[7] भवती नोपलक्षिता । अतो न मन्युं कर्तुमर्हसि ।

**द्रौपदी**—णाह, उदासीणेसु तुह्मेसु मह[8] मण्णु, ण उण कुविदेसु । (क)

**भीमसेनः**—यद्येवमपगतपरिभवमात्मानं समर्थयस्व । (हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य ।) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि ।

**द्रौपदी**—णाह[9], किं वि उव्वेअकालणं तुह्मेसु सण्णिहिदेसु । (ख)

**भीमसेनः**—किमिति नावेदयसि । (केशानवलोक्य[10] ।) अथवा किमावेदितेन ।

---

(क) नाथ, उदासीनेषु युष्मासु मम मन्युः, न पुनः कुपितेषु ।
(ख) नाथ, किमप्युद्वेगकारणं युष्मासु सन्निहितेषु ।

---

विलम्बते ॥ का खलु कियती । प्राप्ताया आगताया ॥ नाथ, उदासीनेषु युष्मासु मम मन्युः, न पुनः कुप्यमानेषु ॥ समर्थयस्व जानीहि ॥ नाथ, न खलु किमप्युद्वेगकारणं युष्मासु सन्निहितेषु जीवत्सु च ॥ **जीवत्स्विति** । 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । दूरमिति क्रियाविशेषणमतिशयार्थम् । अप्रोषि-

---

१. 'वत्स' इत्येतस्मात्पूर्वं, '(सस्मरणम् ।)' इति क्वचिदधिकः पाठः. २ एतदनन्तरम् 'त्वरते मे मनः सङ्ग्रामावतरणाय' इति क्वचिदधिकः पाठः. ३. 'तत्रभवत्या'. ४. 'आर्यागतापि' इति क्वचिन्नास्ति. ५. 'न लक्षिता' ६ 'दृष्ट्वा,' 'विवृत्यावलोक्य च, सादरम्', '(विवृत्यावलोक्य च ।) कथमागता । (सादरम् ।)' इति नानापुस्तकेषु नानाविधः पाठः. ७. 'समुद्धतामर्षैः'. ८. 'मह' इति क्वचिन्नास्ति. ९. 'णाह, किं उव्वेअकालणम्,' 'णाह, ण किं वि उव्वेअकालणम्.' १०. 'केशानवलोक्य, निश्वस्य' इति क्वचित्पाठः.

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च[1] ।
पाञ्चालराजतनया वहते[2] यदिमां दशाम् ॥ १८ ॥

**द्रौपदी**—हञ्जे बुद्धिमदिए, कहेहि[3] णाहस्स को अण्णो मह परिहवेण खिज्जइ । (क)

**चेटी**—जं देवी आणवेदि । (भीममुपसृत्य । अञ्जलिं बद्ध्वा ।) सुणादु[4] कुमालो । इदोवि अहिअदरं अज्ज उव्वेअकालणं आसी देवीए । (ख)

**भीमसेनः**—किं नामास्मादप्यधिकतरम् । बुद्धिमतिके, कथय ।

कौरव्यवंशदावेऽस्मिन्क एष शलभायते ।
बद्धवेणी[5] स्पृशन्नेनां कृष्णां धूमशिखामिव ॥ १९ ॥

---

(क) हञ्जे बुद्धिमतिके, कथय नाथस्य कोऽन्यो मम परिभवेण खिद्यते ।
(ख) यद्देव्याज्ञापयति । शृणोतु कुमारः । इतोऽप्यधिकतरमद्योद्वेगकारणमासीद्देव्याः ।

---

तेष्वपरदेशवासिषु ॥ १८ ॥ हञ्जे बुद्धिमतिके, कथय नाथस्य सर्वं व्यवसितम् । कोऽन्यो मम परिभवेण खिद्यते । यद्देव्याज्ञापयति । शृणोतु कुमार । इतोऽप्यधिकतरमद्योद्वेगकारण समासादित देव्या ॥ **कौरव्येति** । अत्र यद्यपि 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति ष्यञो लुक्प्रसङ्गस्तथापि दुर्योधन एकस्मिन्नेव 'कुर्वादिभ्यो ण्य' इति कौरव्यशब्द व्युत्पाद्य 'तत्र साधु' इति सूत्रेण तस्माद्यत्प्रत्यय । एव 'कौरव्या पशव' (१।२५) इत्यादावप्यूह्यम् । 'वने च वनवह्नौ च दवो दाव प्रकीर्तित' इति शाश्वत । बद्धवेणीमित्यत्र भूतार्थक्तप्रत्ययस्यासाधुत्वमग्रे वेणीबन्धनादित्यदेश्यम् । वेण्यास्तदावद्धत्वादग्र उन्मोकस्य कथनात् । अत एव वेण्या संहार उन्मोकोऽत्रेति ग्रन्थनामापि घटते । शलभायते पतङ्गवदाचरति । वेणी केशवेश प्रवाहश्च । 'एनाम्' इत्यत्रानन्वादेशात् 'एताम्' इति युक्त पाठ । ततोरनित्यत्वात् । कृष्णा द्रौपदी

१. 'अपि'. २ 'वहतीयमिमा दशाम्'. ३ 'णिवेदेहि दाव णाहस्स'. ४ 'कुमाल, इदोवि अहिअ अज्ज मण्णुकालण आसी देवीए,' अथवा 'कुमाल, अदोवि अज्ज अत्थि अवर मण्णुकालण देवीए उप्पण्ण' इति भिन्न. पाठ.. ५. 'मुक्तवेणीम्'.

**चेटी**—सुणादु कुमालो । अज्ज क्खु देवी अम्बासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गन्धालीए पादवन्दणं कादु गदा । (क)

**भीमसेनः**—युक्तमेतत् । वन्द्याः खलु गुरवः । ततस्ततः ।

**चेटी**—तदो पडिणिवुत्तमाणा भाणुमदीए देवी दिट्ठा । (ख)

**भीमसेनः**—(सक्रोधम् ।) आः, शत्रोर्भार्यया दृष्टा । हन्त, स्थानं क्रोधस्य देव्याः । ततस्ततः ।

**चेटी**—तदो ताए देवी पेक्खिअ सहीजणदिण्णदिट्ठीए सगव्वं ईसि विहसिअ भणिअं । अइ जण्णसेणि, कीस तुह्माणं अज्जवि केसा ण संजमीअन्ति । (ग)

(क) शृणोतु कुमारः । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेण सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता ।

(ख) ततः प्रतिनिवर्तमाना भानुमत्या देवी दृष्टा ।

(ग) ततस्तया देवी प्रेक्ष्य सखीजनदत्तदृष्ट्या सगर्वमीषद्विहस्य भणितम् । अयि याज्ञसेनि, कस्माद्युष्माकमद्यापि केशा न संयम्यन्ते ।

श्यामा च ॥ १९ ॥ शृणोतु कुमार । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेण सपत्नीवर्गेण परिवृतार्याया गान्धार्याः पादवन्दनं कर्तुं गता ॥ ततस्तस्मात्परिनिवर्तमाना भानुमत्या देवी दृष्टा । अत्र 'खलु' वाक्यभूषायाम् । अम्बा माता कुन्ती । आ इत्याक्षेपे । ततस्तया देवी प्रेक्ष्य सखीजनदत्तदृष्ट्या सगर्वमीषद्विहस्य भणितम् । अयि याज्ञसेनि द्रौपदि, किमिति युष्माकमद्यापि केशा न संयम्यन्त इति । संयमनमिह बन्धनम् । कलत्रशब्दस्याजहल्लिङ्गतया कलत्र सेति

१ 'क्खु' इति क्वचिन्नास्ति, 'अज्ज क्खु भट्टिणी सहिए सहिदा' इत्यपि पाठः. २ 'गदा आसी'. ३ 'युज्यते, यतोऽभिवन्दनीया गुरवः,' अथवा 'युज्यते । एवमेतत् । अभिवन्दनीया गुरवः' इति पाठान्तराणि. ४ 'देवी' इति क्वचिन्नास्ति. ५ 'आः कथम्' ६. 'युक्तं क्रोधस्थानम्,' 'स्थानं क्रोधस्य सांप्रतं देव्याः,' 'स्थानं खेदस्य देव्याः' इति पाठान्तराणि. ७. 'सहीवअणदिण्णदिट्ठीए'. ८. एतदनन्तरं 'भीम.—न केवलं दृष्टा, उक्ता च । अहो किं कुर्म. । ततस्ततः । चेटी—अइ जण्णसेणि, पञ्चग्गामा पत्थीअन्ति त्ति सुणीअदि । ता कीस दाणी वि दे केसा ण संजमीअन्ति' एवंविधः पाठो बहुपुस्तकेषु दृश्यते.

**भीमसेनः**—सहदेव, श्रुतम् ।

**सहदेवः**—आर्य, उचितमेवैतत्तस्याः। दुर्योधनकलत्रं हि सा। पश्य।[1]

स्त्रीणा हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥ २० ॥[2]

**भीमसेनः**—बुद्धिमतिके, ततो देव्या किमभिहितम् ।

**चेटी**—कुमाल, जइ पडिहीणं मम वअणं भवे तदो देवी भणादि । (क)[3]

**भीमसेनः**—कि पुनरभिहितं भवत्या ।

**चेटी**—तदो मए परिकुव्विअ भणिअं । अइ भाणुमदि, तुह्माणं अमुक्केसु केसहत्थेसु कधं अह्माणं देवीए केसा संजमीअन्ति त्ति । (ख)[4][5]

**भीमसेनः**—(सपरितोषम् ।) साधु बुद्धिमतिके, साधु । तदभि-

(क) कुमार, यदि परिहीन मम वचन भवेत्तदा देवी भणति ।

(ख) ततो मया परिकुप्य भणितम् । अयि भानुमति, युष्माकममुक्तेषु केशहस्तेषु कथमस्माक देव्याः केशाः सयम्यन्त इति ।

सामानाधिकरण्यम् । 'कलत्र श्रोणिभार्ययो' इति विश्व. ॥ **स्त्रीणामिति** । साहचर्यान्नित्यसमाजात् । मधुरा कोमला मधुररसा वा । मूर्च्छयते मूर्च्छा करोति । यद्वा मूर्च्छयते जनमिति शेष । विषविटपो विषशाखाविस्तार. । 'विस्तारो विटपोऽस्त्रियाम्' इत्यमर । क्वचित् 'विषविटपिसमाश्रिता' इति पाठ· । स तु मनोहर । वल्ल्या वृक्षसाहचर्यात् । वल्ली लता । आर्याच्छन्द ॥ २० ॥ कुमार, यदि परिहीनं मम वचन भवेत्ततो देवी वदति ॥ ततो मया परिकुप्य भणितम् । अयि भानुमति, युष्माकममुक्तेषु केशहस्तेषु कथमस्माक देव्या केशहस्ता सयम्यन्त इति । अत्र केशहस्ता प्रशस्तकेशा· ॥ 'साधु बुद्धिमतिके, साधु' इत्यनेन हर्षरूपशिल्पकमुक्तम् । यदुक्त तत्रैव—'चित्तप्रसादो हर्ष स्यात्तन्निमित्तस्य सगमे'

१. 'आर्य, किमिहोच्यते। दुर्योधनकलत्र हि सा' इति बहुपुस्तकेषु पाठ . २. 'विषविटपसमाश्रिता' ३. 'परिजणहीणा भवे' इति बहुपुस्तकाना पाठ·; 'जइ मम बुद्धिपडिहीणत्तण तदो देवी भणादि' इत्यपि क्वचित्पाठ . ४ 'कुमाल, मए एवं भणिद' इति पाठ . ५. 'केसेसु'.

हितं[1] यदस्मत्परिजनोचितम् । (अधीरमासनादुत्तिष्ठन् ।)[2] भवति पाञ्चालराजतनये, श्रूयताम् । अचिरेणैव कालेन

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावबद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीम ॥ २१ ॥

**द्रौपदी**—किं णाह, दुक्करं तुए परिकुविदेण । सव्वहा अणुगेह्णन्तु एदं ववसिदं दे भादरो । (क)

**सहदेवः**—अनुगृहीतमेतदस्माभिः ।

(नेपथ्ये महान्कलकलः । सर्वे सविस्मयमाकर्णयन्ति ।)

---

(क) किं नाथ, दुष्करं त्वया परिकुपितेन। सर्वथानुगृह्णन्त्वेतद्व्यवसितं ते भ्रातरः।

---

इति । सावष्टम्भं निर्भयम् ॥ चञ्चदित्यादि । हे देवि, तव कचान्केशान्भीम उत्तम्भयिष्यति बन्धयिष्यति । कीदृशः सन् । सुयोधनस्य स्त्यानं स्तिमितमपविद्धं क्षिप्तं घनं निरन्तरं यच्छोणितं तेन शोणो लोहितः पाणिर्यस्य स तथा । 'स्त्यानं स्तिमितसंघयोः' इति विश्वः । 'आविद्धक्षिप्तेरिता समाः' इत्यमरः । चण्डः प्रचण्डः ॥ २१ ॥ इह स्त्यानेत्यादिकः प्रतीकाररूपो गण्डः । यदुक्तं तत्रैव—'प्रतिक्रियान्वितं वाक्यं प्रतीकार इति स्मृतः'। इह परिन्यासरूपो मुखसंधिः । यदुक्तं तत्रैव—'परिन्यासस्तु कार्यस्य भाविनो निश्चयाद्भवः' । नाथ, अतिदुष्करं त्वया परिकुपितेन व्यवसितम्। तदनुमन्यन्तामेतद्व्यवसितं देवता ॥

---

१ 'अभिहितं भवत्या' इति पाठः. २. '(अधीरमासनादुत्तिष्ठन् ।)' इत्यत्र क्वचित् '(स्वाभरणानि बुद्धिमतिकायै प्रयच्छति ।)' इति पाठो दृश्यते, '(स्वाभरणानि बुद्धिमतिकायै प्रयच्छति । अधीरमासनादुत्तिष्ठन् ।)' इत्यपि क्वचित्पाठः ३. 'अत्रभवति पाञ्चालराजतनये, किं बहुना । श्रूयताम् ।', अथवा 'अयि पाञ्चालराजतनये, अलं विषादेन। किं बहुना। श्रूयताम्।', अथवा 'भवतु। पाञ्चालराजतनये, श्रूयताम्।' अथवा 'अयि पञ्चालतनये, अलं विषादेन । किं बहुना । यत्करिष्ये तच्छ्रूयताम् ।' इति पाठान्तरम्. ४. 'अपविद्ध', 'अवनद्ध'. ५. 'उत्तम्भयिष्यति'. ६ 'तुए परिकुविदे' इति पाठः. ७ 'सव्वहा' इति क्वचिन्नास्ति. ८. 'तधावि अणुगेह्णन्तु दे ववसिदं देवदाओ'; 'अणुगेह्णन्तु तुए एदं ववसिदं देवदाओ' इति पाठान्तरम्. ९. 'प्रतिगृहीतं मङ्गलवचनमस्माभिः.' इति पाठः.

भीमसेनः[1]—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः[2,3,4]
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः[5]
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥ २२ ॥[6,7]

(प्रविश्य सम्भ्रान्त )

कञ्चुकी—कुमार, एष खलु भगवान्वासुदेवः ।

(सर्वे कृताञ्जलय समुत्तिष्ठन्ति ।)

भीमसेनः—(ससम्भ्रमम् ।)[8] क्वासौ[9] भगवान् ।

कञ्चुकी—पाण्डवपक्षपातामर्षितेन सुयोधनेन [10]संयमितुमारब्धः।

(सर्वे सभ्रम नाटयन्ति ।)

भीमसेनः—किं[11] संयतः ।

कञ्चुकी—नहि नहि, संयमितुमारब्धः ।

भीमसेनः[12]— किं कृतं देवेन ।

कञ्चुकी—ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्छि-

---

कलकलोऽकस्मादुत्थितो महाशब्द ॥ **मन्थेत्यादि** । मन्थो मथनदण्डस्तेनायस्त क्षिप्तो योऽर्णव· समुद्रस्तदम्भसा प्लुत व्याप्त यत्कुहर मध्य तेन चलन्यो मन्दरनामा शैलस्तच्छब्दवद्गम्भीरोऽय दुन्दुभि केन ताडित इत्यन्वय. । कोणाघातेषु सत्सु । 'ढक्काशतसहस्राणि भेरीशतशतानि च । एकदा यत्र हन्यन्ते कोणाघात स उच्यते ॥' इति भरत । घटा समूह । सघट्टो मिलनम् । अग्रदूत प्रथमकथक । उत्पातनिर्घातवातोऽशुभ प्रचण्डपवन । प्रतिरसित प्रतिरव· ॥ २२ ॥ कञ्चुकी महल्लक. । सयतो बद्ध । 'बद्धे कीलितसयतौ' इत्यमर । इह समयरूपो निर्वहणसधि । यदाह—'विरोधस्याख्यान यद्वा दु खस्य समयो मत ' । सावेग सस्नेहम् । हन्त हर्षे । विश्वरूप विश्वभरमूर्ति· । सपातो

---

१ 'भीमसेन.—(सानन्दम् ।) आये, किमेतत्' इति क्वचिदधिकः पाठ.. २. 'मन्थायस्तार्णवार्णः'. ३. 'प्लुति' ४. 'चलन्'. ५. 'कुरुपति'. ६. 'समो'. ७. 'ताड्यते'. ८. 'ससंभ्रमम्' इति क्वचिन्नास्ति. ९. 'क्वासौ क्वासौ भगवान्'. १० 'संयन्तुम्'. ११. 'कथ म भगवान्वासुदेवः सयत.' इत्यपर. पाठ.. १२. 'भीमः—(सपरितोषम् ।) हन्त, विघटित. सधिर्भग्नावूरू च सुयोधनस्य । अथ किं कृत देवेन' इत्यपि क्वचित्पाठः.

तमवधूय कुरुकुलमस्मच्छिबिरसंनिवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति ।

**भीमसेनः**—(सोपहासम् ।) कि नाम दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति । (आकाशे दत्तदृष्टि ।) आः दुरात्मन्कुरुकुलपांसुल[2], एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम् ।

**सहदेवः**—आर्य, किमसौ दुरात्मा सुयोधनहतको[3] वासुदेवमपि भगवन्तं स्वरूपेण[4] न जानाति ।

**भीमसेनः**—वत्स, मूढ खल्वयं दुरात्मा कथं जानातु । पश्य ।

आत्मारामा विहितरतयो[5] निर्विकल्पे समाधौ
ज्ञानोत्सेकाद्[6]विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते[7] कमपि[8] तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः[9] कथमयममुं वेत्ति[10] देवं पुराणम् ॥ २३ ॥

[11]आर्य जयंधर, किमिदानीमध्यवस्यति गुरुः ।

मेलकम् । हतको निन्द्य. । पाशुल पापकारिन् । मूढो मूर्ख । खलु वाक्यभूषाया निश्चये वा ॥ **आत्मेत्यादि** । सत्त्वनिष्ठा सात्त्विकभावापन्ना मुनयो य भगवन्त वीक्षन्ते साक्षात्कुर्वन्ति । कीदृशा । आत्मैवारामो वन येषा ते । तथा चात्मवनयोस्तुल्यत्वेनात्यन्तमौदास्यमाविष्कृतम् । यद्वा । आत्मन्यासमन्ताद्भावेन रमन्त इत्यात्मारामा. । त्यक्तेतरसङ्गा इत्यर्थ । पुन. कीदृशा. । निर्विकल्पे निष्कलुषे निर्णीते त्यक्तभेदे वा समाधौ नियमविशेषे विहितरतय कृतानुरागा । 'विहितधृतय.' इत्यपि पाठ । तत्र विहिता धृतिर्धारणा यैस्ते । इद त्वत्यन्ताभ्यासवैराग्याभ्या भवति । तथा च गीता—'असशय महाबाहो मनो दुर्निग्रह चलम् । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥' इति । यद्वा । आत्मारामे आत्मनीवारामेऽप्यासमन्ताद्विहितरतय कृतानुरागा । यद्वा । आत्मैवारामो वन तत्रासमन्ताद्भावेन विहितरतय । अस्मिन्नर्थद्वये निर्विकल्पे समाधौ सति य

१. 'विहस्य' इति पाठ २. 'पासन'. ३. 'सुयोधनो'. ४ 'स्वेन रूपेण' ५ 'मतय.', 'धृतय' ६ 'ज्ञानोद्रेकात्' ७ 'ध्यायन्ते' ८ 'किमपि'. ९. 'मोहात्मा' १०. 'वेत्तु'. ११ 'आर्य मैत्रेय, किमिदानीमध्यवस्यन्ति गुरवः' इति बहुपुस्तकाना पाठ

कञ्चुकी—स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः। (इति निष्क्रान्त।)

(नेपथ्ये। कलकलानन्तरम्।)

भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च, शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृत
यद्विस्मर्तुमपीहितं शमवता शान्ति कुलस्येच्छता।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिर जृम्भते॥ २४॥

---

वीक्षन्त इत्यर्थ। पुन कीदृशा। ज्ञानोत्सेकात्तत्त्वज्ञानमाहात्म्याद्विनाशिततामसगुणा विनाशितमिथ्याज्ञाना वा। अनेन धृते फलमुक्तम्। 'ज्ञानोद्रेकात्' इत्यपि पाठ। उद्रेक प्रौढि। अनेन तत्रासङ्ग उक्त। अत्र तु प्रथम वनवास, तत समाधिलाभ, ततस्तत्त्वज्ञानेन मिथ्याज्ञानविनाश, तत सत्वनिष्ठता, तत साक्षात्कार इति तत्त्वज्ञानोत्पादक क्रमोऽपि बोद्धव्य। यद्वा। अन्यत्र सङ्गत्याग, ततो धृति, तत प्रज्ञाप्रौढि, ततोऽविद्यालक्षणतमोग्रन्थिभेद, ततो राजसप्रवृत्त्युच्छेदो मूलोच्छेदात्, तत सात्विकी प्रवृत्ति, तस्या फलमीश्वरप्रसाद, तेन भगवान्समस्ततम प्रकाशयो परतरो दृश्यते। तमेव तादृशपुरुषोऽपि न पश्यति। किं पुनर्मूढो दुर्योधन इति भाव। य कीदृशम्। कमप्यनिर्वचनीयम्। तमसा मिथ्याज्ञानाना ज्योतिषा तत्त्वज्ञानाना परस्तात्परम्। ताभ्यामप्यगम्यमित्यर्थ। अत एव कमपीत्युक्तम्। त देव कथमय मोहान्धो जानातीति। पुन कीदृशम्। पुराणमनादिसिद्धम्। तथा च यमनियमादिसिद्धपुरुषधौरेयगम्यमिति त्वनितम्॥ २३॥ जयधरनामा कञ्चुकी। अध्यवस्यति करोति॥ **यत्सत्येति।** अवश्यपालनीय सकल्पो व्रतम्। सत्यमेव व्रतम्। मन्दीकृतम्। मयेति शेष। मनसेति विशेषणद्वारा विशेष्यप्रतिपत्तिरिति वा। यत्क्रोधज्योति। शमवता शान्तेन मया। द्यूतमेवारणिर्यज्ञकाष्ठभेदस्तत्र सभृत समुपचितम्। 'निर्मन्थ्य दारुणि त्वरणिर्द्वयो' इत्यमर। नृपसुता द्रौपदी। कुरुरेव वनम्। यौधि-

---

१. 'नृपवधू'. २. 'कुरुकुले'.

**भीमसेनः**—(आकर्ण्य। सहर्षम्।) जृम्भतां जृम्भतामप्रतिहतप्रसरमार्यस्य क्रोधज्योतिः ।

**द्रौपदी**—णाह, किं दाणीं एसो पलअजलहरत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही ताडीअदि । (क)

**भीमसेनः**—देवि, किमन्यत् । यज्ञः प्रवर्तते ।

**द्रौपदी**—(सविस्मयम् ।) को एसो जण्णो । (ख)

**भीमसेनः**—रणयज्ञः । तथाहि ।

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।

---

(क) नाथ, किमिदानीमेष प्रलयजलधरस्तनितमासलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ।

(ख) क एष यज्ञः ।

---

ष्ठिर युधिष्ठिरसबन्धि । जृम्भते प्रकाशते ॥ २४ ॥ नाथ, किमिदानीमेष प्रलयजलधरमन्थरस्तनितमासलोद्घोषभीषण क्षणे क्षणे समरदुन्दुभिस्ताड्यते । अत्र मन्थररतनित गम्भीरगर्जित तद्वन्मासलोऽधिको य उद्घोष उच्चै शब्दस्तेन भीषण । इह विद्रवनामा गर्भसधि । यदाह—'शङ्काकलङ्कप्रभव सभ्रमो विद्रवो मत ' इति । ननु भणामीत्यर्थे । अधुना 'बीजप्ररोह उद्भेदो यत्किञ्चित्प्रभवात्मक ' इति भरताद्भुद्भेदरूप मुखसधिमाह—**चत्वार इति** । चत्वारो भीमार्जुनसहदेवनकुला । कर्मोपदेष्टाचार्य । दीक्षितो दीक्षां प्रापित । नरपतिर्युधिष्ठिर. । पत्नी द्रौपदी । गृहीतव्रता कृतनियमा । कौरव्या कुरुकुलजाता । प-

---

१. '(आकर्ण्य । सहर्षामर्षम् ।)' इति क्वचित्पाठ' २ 'भीमसेन —(सहर्षम् ।) जृम्भता जृम्भताम् । सप्रलप्रतिहतमार्यस्य क्रोधज्योति ' इति दशरूपके पाठः. ३ 'आर्यक्रोधज्योति '. ४ 'द्रौपदी–(सविस्मयम् ।) णाह' इति क्वचित्पाठ. ५ 'कह' ६. 'पलअजलहरघणत्थणिदमसलो क्खणे क्खणे समरदुन्दुही ताडीअदि'; अथवा 'पलअजलहरक्कणिअमसलो क्खणे क्खणे चण्डघोसो समरदुन्दुही ताडीअदि'; अथवा 'पलअजलहरघणत्थणिदमसलो क्खणे क्खणे समरदुन्दुही चण्डघोसो दालुनो ताडीअदि' इति नानापुस्तकेषु नानाविध' पाठ..

कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥२५॥

**सहदेवः**—आर्य, गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम् ।

**भीमसेनः**—वत्स, एते वयमुद्यता आर्यस्यानुज्ञामनुष्ठातुमेव । (उत्थाय ।) तत्पाञ्चालि, गच्छामो वयमिदानी कुरुकुलक्षयाय ।

**द्रौपदी**—(बाष्प धारयन्ती ।) णाह, असुरसमराहिमुहस्स हरिणो विअ मङ्गलं तुह्माण होदु । जं च अम्बाकुन्दी आसासदि तं तुह्माणं होदु । (क)

**उभौ**—प्रतिगृहीतं मङ्गलवचनमस्माभिः ।

**द्रौपदी**—अण्णं च णाह, पुणोवि तुह्मेहि समरादो आअच्छिअ अहं समासासइदव्वा । (ख)

(क) नाथ, असुरसमराभिमुखस्य हरेरिव मङ्गल युष्माक भवतु । यच्चाम्बाकुन्त्याशास्ते तद्युष्माक भवतु ।

(ख) अन्यच्च नाथ, पुनरपि युष्माभिः समरादागत्याह समाश्वासयितव्या ।

---

शवो यज्ञार्थ घातनीया । राजन्योपनिमन्त्रणाय क्षत्रियाह्वानाय । रसति शब्दायते । स्फीत मनोज्ञ यथा स्यादेवम् । यशोदुन्दुभिर्यशःप्रधानो वाद्यविशेषः । यद्वा । यशोदुन्दुभिः पटह । 'स्याद्यश पटहो ढक्का भेर्यामानकदुन्दुभि' इत्यमर ॥ २५ ॥ अनुज्ञात इति पञ्चम्यास्तसिः । इह 'देवि, गच्छामः' इत्यनेन कारणरूपो मुखसधि । यदाह—'उद्यम प्रस्तुतार्थस्य कारण परिकीर्तितम्' ।

१. 'हतो दुन्दुभिः' २ 'उद्यता एवार्यस्यानुज्ञामनुष्ठातुम्' इत्यपि पाठः. ३. 'देवि, गच्छाम.'. ४ 'ज च अम्बाकुन्दी–' इत्यादि क्वचिन्नास्ति. ५. एतद्वचन क्वचिन्नास्ति. ६. 'चेटी–अण्ण च देवी भणादि । णाह, तुह्मेहि पुणोवि समरादो आअच्छिअ अह आसासइदव्वा' इति बहुपुस्तकाना पाठः; दशरूपके तु 'द्रौपदी–णाह, पुणोवि तुह्मेहिं अह आअच्छिअ समासासिदव्वा' एवविधः पाठो वर्तते.

**भीमसेनः**— [1]ननु पाञ्चालराजतनये, किमद्याप्यलीकाश्वासनया ।

भूयः[2]परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न [3]पश्यसि वृकोदरम् ॥ २६ ॥

**द्रौपदी**—णाह, [4]मा क्खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणवेक्खिदसरीरा [5]संचरिस्सध । जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअन्ति । (क)

**भीमसेनः**—[6]अयि सुक्षत्रिये,

---

(क) नाथ, मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनवेक्षितशरीराः संचरिष्यथ । यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते ।

नाथ, असुरसमराभिमुखस्य हरेर्यन्मङ्गलं वृत्तं तद्युष्माकं भवतु । यच्चाम्बा कुन्ती वदति तद्युष्माकं भवतु । अन्यच्च नाथ, पुनरपि त्वया समरादागत्याहं समाश्वासयितव्या । अलीकं मिथ्या ॥ **भूय इति ।** भूयः परिभवः प्रचुरपराभवः । क्लान्तिः क्षमा । विधुरितं व्याप्तम् । वृकोदरं भीमम् । 'न पश्यसि' इति पाठे भविष्यति लट् ॥ २६ ॥ मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपेक्षितशरीरावरणा रणे पुनः संचरत । यतोऽप्रमत्तसुखसंचाराणि रिपुबलानीति श्रूयते । अत्र 'खलु' निषेधेऽवधारणे वा । संचरतेत्यत्र यूयमिति शेषः । अप्रमत्तः सावधानः । प्रमत्त इत्यत्र 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति सूत्रेण न नत्वम् ।

---

१. 'देवि, किमिवालीकाश्वासनाभिः', अथवा 'देवि, किमद्याप्यलीकाश्वासनेन'; अथवा 'देवि, किमलीकाश्वासनेन'; अथवा 'देवि, किमिवालीकाश्वासनेन' इति नानाविधः पाठः. २. 'परिभवक्षान्तिलज्जाबन्धुरिताननम्' इत्यपि पाठः. ३. 'द्रक्ष्यसि' ४. 'मा क्खु मा क्खु' इति बहुपुस्तकेषु पाठः. ५. 'परिक्कमिस्सध'. ६ 'शृणु सुक्षत्रिये, समर्था वयं सङ्क्रमितुम्'; अथवा 'अयि सुक्षत्रिये, समर्था वयमस्मिन्रणे परिक्रमितुम् । शृणु'; अथवा 'अयि सुक्षत्रिये, समर्था वयं सङ्क्रमितुम्' इति नानाविधः पाठः.

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नाना स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥२७॥

(इति निष्क्रान्ता सर्वे।)

## इति प्रथमोऽङ्कः ।

'न ध्याख्यापूमूर्छिमदाम्' इति प्रतिषेधात् ॥ **अन्योन्येति** । आस्फाल सघट्ट । भिन्नो दारित । मस्तिष्क 'गोर्दा गोदी' इति लोके प्रसिद्धम् । स्यन्दनो रथ । कृतपदन्यासोऽत एव विक्रान्त पत्ति पदातिर्यत्र तादृशे । स्फीतासृग्दीप्तरक्त तत्पानगोष्ठीषु रसन्त्यशिवशिवामङ्गलशृगालिका सैव तूर्यो मर्दल तेन नृत्यत्कबन्धोऽपमूर्द्धकलेवरो यत्र तादृशे ॥ २७ ॥ सर्वे निष्क्रान्ता इति सर्वत्राङ्के कर्तव्यम् । तदुक्तं तत्रैव—'पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गम ' इति ॥

असूत य रत्नधरो गुणीशस्तत्तद्गुणाढ्या दमयन्तिकापि ।
जगद्धर तस्य कृतौ व्यरसीदाद्योऽयमङ्को वरटिप्पनेऽत्र ॥

इति प्रथमोऽङ्कः ।

१. 'वसासान्द्रमस्तिष्कपङ्के'.

## द्वितीयोऽङ्क ।

(तत प्रविशति कञ्चुकी ।)

**कञ्चुकी**—[1]आदिष्टोऽस्मि महाराजदुर्योधनेन—'वि[2]नयंधर,[3]सत्वरं गच्छ त्वम् । अन्विष्यतां देवी भानुमती । अपि निवृत्ता अम्बायाः पादवन्दनसमयान्न वेति । [4]यतस्तां विलोक्य निहताभिमन्यवो [5]राधेयजयद्रथप्रभृतयोऽ[6]स्मत्सेनापतय. समरभूमि गत्वा [7]संभाजयितव्या.' इति । तन्मया द्रुततरं गन्तव्यमिति । अहो प्रभविष्णुता महाराजस्य, यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधनिर्वास[8] । अथवा किमिति जराम[9]ुपालभेय, यत. [10]सर्वान्त'पुरचारिणामयमेव वैहारिको वेषश्चेष्टा च । तथाहि ।

नोच्चैः सत्यपि च[11]क्षुषीक्षितुमलं श्रुत्वापि [12]नाकर्णितं
शक्तेनाप्यधिकार इत्यधिकृता यष्टि [13]समालम्बिता ।

---

**आदिष्टोऽस्मीति** । 'सभावयितव्या' इत्यनेनान्वय. । अन्विष्यतामनुसधीयताम् । अपि प्रश्ने सभावनाया वा । 'अम्बा माताथ जननी' इत्यमर । राधेय कर्ण । सभावयितव्या सनिहितीकर्तव्या । प्रभविष्णुता प्रभावशालिता । जरसा वार्धकेन । मर्यादामात्र मर्यादापर्यवसन्न । अवरोधव्यापारोऽन्त पुरकर्म । व्यावहारिको व्यवहारजन्य । उक्तोपन्यासे 'तथाहि' इति शब्दप्रयोग । **नोच्चैरिति** । चक्षुषि सत्यपि उच्चैरीक्षितु नालमह न समर्थ । नाकर्णित मयेत्यन्वय । शक्तेनापि मया यष्टि' समाश्रिता । कीदृशी । अविकारोऽय मम कञ्चुकिनो यष्टिसमालम्बनमित्यधिकृता योग्या । स्खलित व्यापारप्रच्यवः ।

---

१. 'आज्ञापितोऽस्मि' इति पाठ.. २. 'यथा विनयधर'. ३. 'सत्वरम्' इति क्वचिन्नास्ति. ४. 'यतो मया तामवलोक्य' इति पाठ'. ५ 'द्रोणराधेयजयद्रथप्रभृतय' इति क्वचित्पाठ.. ६. 'अस्मत्' इति क्वचिन्नास्ति. ७ 'सभावयितव्या' ८. 'अवरोधव्यापार''. ९. 'उपालभे', 'उपालभामहे'. १०. 'सर्वेषामेवायमन्तःपुरचारिणा वैहारिको वेष.'; 'सर्वान्तःपुरिकाणामयमेव व्यवहारिको वेषः' इति पाठान्तरम्'. ११. चक्षुषीक्षितमलम्'. १२. 'नाकर्णितुम्'. १३. 'समालम्ब्यते'.

सर्वत्र स्खलितेषु दत्तमनसा यातं तथा नोद्धतं
सेवा[2]स्वीकृतजीवितस्य जरसा किं नाम यन्मे[1] कृतम् ॥ १ ॥

(परिक्रम्य दृष्ट्वा। आकाशे।) विहङ्गिके, अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती। (कर्णं[3] दत्त्वा।) किं कथयसि—आर्ये, एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुदेवपादवन्दना[4]द्यप्रभृत्यारब्धनियमा देवगृहे[5] बालोद्याने तिष्ठतीति। तद्भद्रे, गच्छ त्वमात्मव्यापाराय, यावदहमप्यत्रस्थां[6] देवीं महाराजस्य निवेदयामीति। (परिक्रम्य।) साधु पतिव्रते, साधु, स्त्रीभावेऽपि[7] वर्तमाना वरं भवती, न पुनर्महाराजः। योऽयमुद्यतेषु बलवत्सु[8], अथवा किं बलवत्सु, वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्व[9]द्याप्यन्तः[10]पुरविहारसुखमनुभवति। (विचिन्त्य।) इदमप[11]रमयथातथं स्वामिनश्चेष्टितम्। कुतः।

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।

---

उद्धत यथा स्यादेव मया न जात नोद्धतेन मया भूतमित्यर्थ । नामानवक्लृप्तौ। जरसा मम किं नाम कृतम्। अपि तु न किमपि। कीदृशस्य। सेवान्धीकृतजीवितस्य। सेवार्थमन्धीकृत निष्फलीकृत जीवित येन तस्येत्यर्थ। क्वचित् 'सेवास्वीकृतजीवितस्य' इति पाठ.। तत्र सेवार्थं स्वीकृत जीवितं जीवन येन। तथा च सेवानिमित्तमेव ममान्ध्यादिक न तु जराकृतमिति भाव ॥ १ ॥ आकाश इति। 'दूरस्थाभाषण यत्स्यादशरीर निवेदनम्। परोक्षान्तरित वाक्य तदाकाश निगद्यते ॥' इति भरत। विहङ्गिका पक्षिवधू। देवगृहप्रधानमुद्यानं वनम्। वर मनागिष्टा। 'मनागिष्टे वर यत्तु कश्चिदाह तदव्ययम्' इति विश्व। विहार क्रीडा। अयथायथमनर्हम्। **आ शस्त्रेति**। यदसौ भीष्म पाण्डुसू-

---

१. 'मया'. २ 'सेवान्धीकृतजीवितस्य' ३. '(कर्णं दत्वा, आकाशे।)' इति कचित्पाठः. ४. 'गुरुपादवन्दना'. ५. 'देवगृहे' इति कचिन्नास्ति. ६. 'अहमपि महाराजस्य सदेशमावेदयामि' इति क्वचित्पाठः. ७. 'अपि' कचिन्नास्ति ८. 'बलवत्स्वबलवत्सु वा वासुदेवसहायेषु' इति बहव.. ९. 'अरिषु च' इति पुस्तकान्तरे पाठः. १०. 'अन्तःपुरविहारम्'; 'अन्तःपुरसुखम्'. ११. 'इदमपरमयथार्थचेष्टित स्वामिनः', 'इदमयथातथ स्वामिनश्चेष्टितम्' इति पाठः.

प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥ २ ॥

सर्वथा दैवं नः स्वस्ति करिष्यति । तद्यावदत्रस्थां देवीं महाराजस्य निवेदयामि । (इति निष्क्रान्त ।)

विष्कम्भकः ।

(तत प्रविशत्यासनस्था देवी भानुमती सखी चेटी च ।)

**सखी**—सहि भाणुमदि, कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अतिमेत्तं संतप्पसि । (क)

**चेटी**—भट्टिणि, सोहणं भणादि सुवअणा । सिविणअन्तो जणो किं ण क्खु प्पलवदि । (ख)

(क) सखि भानुमति, कस्मादिदानीं त्व स्वप्नदर्शनमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैव विगलितधीरभावातिमात्र सतप्यसे ।

(ख) भट्टिनि, शोभन भणति सुवदना । स्वपञ्जनो कि न खलु प्रलपति।

नुभि शरैः शायितस्तन्नास्य तापाय तापार्थम् । तादर्थ्ये चतुर्थी । कीदृश । शस्त्रग्रहणादारभ्य सफलपरशोर्मुने परशुरामस्यापि जेता । यदयमभिमन्योर्वधात्प्रीत । कीदृशस्य । महारथविजयश्रान्तस्यैकस्य शत्रुच्छिन्नकोदण्डस्य च । एकाकीति । 'एकादाकिनिचासहाये' इत्याकिनिच्प्रत्यय ॥ २ ॥ 'दैव दिष्ट भागधेयम्' इत्यमर । स्वस्ति कल्याणम् । नोऽस्माकम् ॥ **विष्कम्भक इति** । 'कुतोऽपि स्वेच्छया क्लृप्तो ह्यङ्गस्तेनोभयोरपि । विष्कम्भक स विज्ञेय कथार्थस्यापि सूचक ॥' इति भरत ॥ सखि भानुमति, किमितीदानी त्व स्वप्नमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वा विगलितधीरतातिमात्र सतप्यसे । अत्र 'महिषी कृताभिषेकायाम्' इत्यमर ॥ शोभन वदति सुवदना । स्वपन्खलु जनो यत्किमपि विप्रलपति । अत्र खलु प्रसिद्धौ । विप्रल-

१. 'करिष्यतीति' इति क्वचित्पाठ.. २ 'तद्यावदहमत्रस्था देवीं भानुमती निवेदयामि महाराजस्य' इति क्वचित्पाठ.. ३. एतदनन्तरम् 'भानुमती—एव्व ण्णेद ।' इति क्वचिदधिकः पाठ.. ४ 'सिविणअन्तो जणो ण हु कि वि ण प्पलवदि'; अथवा 'सिविणअन्तो जणो ण हु कि कि ण प्पलवदि'; अथवा 'सिविणअन्तो जणो कि कि ण विप्पलवदि'; अथवा 'सिविणअन्तो जणो ण कि प्पलवदि' इति पाठान्तरम्.

भानुमती—हञ्जे, एव्वं ण्णेदं । किंणु[1] एदं सिविणअं अदिमेत्तं अकुसलदंसणं मे पडिभादि । (क)

सखी—जइ[2] एव्वं ता कहेदु पिअसही । जेण अह्मे वि पडिट्ठावअन्तीओ प्पसंसाए देवदासंकित्तणेण अ पडिहडिस्सामो । (ख)

चेटी—देवि[3], एव्वं ण्णेदं । अकुसलदंसणा वि[4] सिविणआ[5] प्पसंसाए कुसलपरिणामा होन्ति त्ति सुणीअदि । (ग)

भानुमती—जइ[6] एव्वं ता कहइस्सम् । अवहिदा[7] होध । (घ)

---

(क) हञ्जे, एवमेतत् । किन्वय स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति ।

(ख) यद्येव तत्कथयतु प्रियसखी । येनावामपि प्रतिष्ठापयन्त्यौ प्रशसया देवतासकीर्तनेन च परिहरिष्यावः ।

(ग) देवि, एवमेतत् । अकुशलदर्शना अपि स्वप्नाः प्रशसया कुशलपरिणामा भवन्तीति श्रूयते ।

(घ) यद्येव तत्कथयिष्ये । अवहिते भवतम् ।

---

पति विसवादि वचो वदति ॥ सखि, एवमेतत् । किन्त्वेष मे स्वप्नोऽतिमात्रमकुशलदर्शन प्रतिभासते ॥ यद्येव तत्कथयतु प्रियसखी । येन मया प्रतिष्ठापयन्त्या प्रशसया देवतासकीर्तनेन च परिहरिष्यते । अत्र प्रतिष्ठापयन्त्या स्वप्न शुभार्थक कुर्वत्येत्यर्थ ॥ देवि, एवमेतत् । अकुशलदर्शना अपि स्वप्ना प्रशसया कुशलपरिणामा भवन्तीति श्रूयते ॥ यद्येव तत्कथयिष्ये । अवहिते भवतम् ॥ कथयतु प्रियसखी ॥ मुहूर्त तिष्ठ तावद्यावत्सर्व स्मरिष्या-

---

१. 'किं उण एद मे अकुसलदसण पडिभादि सिविणअ', अथवा 'मम उण अकुसलदसण पडिभादि सिविणअ'; अथवा 'किं उण एद अकुसल पडिभादि सिविणअ' इति नानापुस्तकेषु नाना विधः पाठ २. 'पिअसहि, जइ एव्व ता कहेहि सिविणअ। ज अह्मे वि पडिस्सावअन्तीओ वग्गमप्पसाए देवदासकित्तणेण दुव्वादिपडिग्गहेण अ पडिहडिस्सामो' इति पाठ ३. 'देवि, एव्व ण्णेद' इत्यत्र 'भट्टिणि, सोहण क्खु भणादि सुवअणा,' अथवा 'सोहण क्खु भणादि सुवअणा' इति पाठान्तरम् ४ 'वि' इति क्वचिन्नास्ति. ५. 'देवदाण पससाए' इति बहुपुस्तकाना पाठः. ६. 'जइ एव्व ता' इत्यत्र 'हला, देण हि' इति क्वचित्पाठ.. ७. 'अवहिदा दाव होहि' इति बहुपुस्तकानां पाठः.

**सखी**[1]—कहेदु पिअसही[2] । (क)

**भानुमती**—मुहुत्तअं चिट्ठ जाव सव्वं सुमरिस्सम् । (इति चिन्तां नाटयति ।) (ख)

(ततः प्रविशति दुर्योधनः कञ्चुकी च ।)

**दुर्योधनः**—सूक्तमिदं कस्यचित्[3] ।

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिणाम्[4] ॥ ३ ॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समुच्छ्वसितमिव[5] नश्चेतसा ।

**कञ्चुकी**—देव, नैवमतिदुष्करमाचार्यस्य शस्त्रप्रभावात्[6] । कर्णजयद्रथयोर्वा का नाम[7] श्लाघा ।

**राजा**—विनयंधर, किमाह भवान्[8] । एको[9] बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानाम् । तदत्र न खलु कश्चिद्दोषः । मूढ, पश्य ।

---

(क) कथयतु प्रियसखी ।

(ख) मुहूर्तं तिष्ठ यावत्सर्वं स्मरिष्यामि ।

---

मि ॥ सूक्तं शोभनोक्तिः । **गुप्त्येति** । अपकारिणां शत्रूणामपकारो गुप्त्या निभृतं साक्षात्सर्ववेद्यो महान्स्वल्पो वा स्वयं वान्येन वा कृतो महतीं प्रीतिं करोतीत्यन्वयः ॥ ३ ॥ का नाम अपि तु न कापि । नामानवक्लृप्तौ । लूनशरा-

---

१ 'सखी—अवहिदह्मि । कहेदु पिअसही ।' इति बहुपुस्तकानां पाठः २. एतदनन्तरं केषुचित्पुस्तकेषु 'भानुमती—अज्ज किल मे पमदवणे आसीणाए अग्गदो केण वि अदिसअदिव्वरूवेण णउलेण अहिसदं वावादिदम् । उभे—(अवधार्यात्मगतम् ।) सन्तं पावं सन्तं पावम् । पडिहदममङ्गलम् । (प्रकाशम् ।) देवि, तदो तदो । भानुमती—हला, भएण विसुमरिदह्मि । ता चिट्ठ जाव सव्वं सुमरिअ कहइस्सम् । (इति चिन्तां नाटयति ।)' इति पाठो वर्तते, क्वचित्तु 'भानुमती—हला, भएण विसुमरिदह्मि । ता चिट्ठ जाव सव्वं सुमरिअ कहइस्सम् । (इति चिन्तां नाटयति ।)' इति पाठः समुपलभ्यते ३. 'कस्यापि' ४ 'अपकारिषु' ५. 'उच्छ्वसितमिव'. ६ 'नेदमतिदुष्करमाचार्यशस्त्रप्रभावाणाम्'; 'नेदमतिदुष्करमाचार्यस्यास्त्रप्रभावेण'. ७. 'नाम' इति क्वचिन्नास्ति. ८. 'भगवान्' ९ 'एकाकी बहुभिर्बालो लूनशरासनश्च निहत इति । पश्य' इति पाठः.

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ ४ ॥

**कञ्चुकी**—(सवैलक्ष्यम् ।) देव[1], न ममायं संकल्पः । किं[2] तु वः[3] पौरुषप्रतीघातोऽस्माभिरेनालोचितपूर्व[4] इत्यत[5] एवं विज्ञापयामि ।

**राजा**—एवमिदम्[6] ।

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं[7] सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥ ५ ॥

**कञ्चुकी**—(कर्णौ पिधाय । सभयम् ।) शान्तं[8] पापम् । प्रतिहतममङ्गलम् ।

**राजा**—विनयंधर, किं मयोक्तम् ।

**कञ्चुकी**—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतं सुयोधनः ॥ ६ ॥

एतद्विपरीतमभिहितं देवेन ।

**राजा**—विनयंधर, अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्य[9] वासभवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं[10] मे मनः[11] । तदादेशय तमुद्देशं यत्रस्था भानुमती ।

**कञ्चुकी**—इत[12] इतो देवः ।

---

सनश्छिन्नधनुः ॥ **हत इति** । जरति वृद्धे । गाङ्गेये गङ्गापुत्रे भीष्मे । शिखण्डी क्लीबरूपो योधभेदः । तं पुरस्कृत्याग्रेकृत्य गाङ्गेये हते सतीत्यन्वयः ॥ ४ ॥ संकल्प इच्छा । वो युष्माकम् । **सहभृत्येति** । सहभृत्यगणमित्यादौ सभावो वैकल्पिकः । न चिरादित्यत्राचिरादित्यर्थः । न शब्द एवायं न तु नञ्समासः ॥५॥ पठति । 'न चिरात्पाण्डुसुतं सुयोधनः' इत्याकारेण ॥६॥ व्याक्षिप्तं चपलम् ॥ इत इत ।

---

१. 'देव, नैवेदं कल्पयितुमर्हसि' इति पाठः. २ 'यतः'. ३. 'तव'. ४ 'नावलोकितपूर्वः'; 'नावलोचितपूर्वः' ५. 'यत एव ब्रवीमि' इति क्वचित्पाठः ६ 'एवमेवैतत्', 'एवमेतत्'. ७. 'सबलम्'. ८ 'शान्तं पापं शान्तं पापम्' इति क्वचित्पाठः. ९. 'आत्मानम्'. १०. 'आक्षिप्तम्', 'आक्षिप्तमिव'. ११. 'चेतः'. १२. 'इत इत एतु देवः'; 'इत एतु देवः'.

(उभौ परिक्रामत ।)

**कञ्चुकी**—(पुरोऽवलोक्य । समन्ततो गन्धमाघ्राय ।) देव, पश्य पश्य । एतत्तुहिनकणशिशिरसमीरणोद्वेल्लितवृन्तबन्धुरशेफालिकाविरचितकुसुमप्रकरमीपदालोहितमुग्धवधूकपोलपाण्डुफलिनीविजितश्यामलतासौभाग्यमुन्मीलितबहुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीयमग्रतस्ते बालोद्यानम् । तदवलोकयतु देवः । तथाहि ।

प्रालेयमिश्रमकरन्दकरालकोशै
पुष्पै समं निपतिता रजनीप्रबुद्धैः ।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति ॥ ७ ॥

**राजा**—(समन्तादवलोक्य ।) विनयंधर, इदमपरमस्मिन्नुषसि रमणीयतरम् । पश्य ।

जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
र्भाभिर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः ।

---

गम्यतामिति शेष ॥ तुहिन हिमम् । शिशिर शीतलम् । उद्वेल्लित चपलीकृतम् । वृन्त प्रसवबन्धनम् । बन्धुर निम्नोन्नतम् । शेफालिका पुष्पभेद । 'शेफालिका तु सुवहा निर्गुण्डी नीलिकापि सा' इत्यमर । 'प्रियगु फलिनी फली' इत्यमर । श्यामलता 'सर्तुल' इति प्रसिद्धा । **प्रालेयेति** । प्रालेय हिमम् । मकरन्द पुष्परस । 'करालो दन्तुरे तुङ्गे' इत्यमर । कोशो मध्यम् । मुकुल कलिका । अलयो भ्रमरा । कमलानि पतन्ति गच्छन्ति ॥ ७ ॥ उषसि प्रभाते । **जृम्भेति** । जृम्भारम्भो विकाशोपक्रम इत्यर्थ । दलोपान्त पत्रसमीपम् । तदेव जालमानायो गवाक्ष वा । भातीति भा । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । 'पुलिङ्गोऽप्ययम्' इत्यमरटीकायां श्रीकर । यद्वा । 'भाभिरिति पक्षे पुलिङ्गोऽव्यय भास्शब्द' । 'प्रभायामपि भा शब्द सान्त पुलिङ्ग एव च' इति शब्दभेदादित्यवधेयमिह

---

१. 'समीरणोद्वेल्लितबन्धनच्युतशेफालिका–' २. 'प्राकारम्'. ३ 'कपोलपाटललोध्रप्रसूनविजित–'. ४ 'वितत'. ५.'बकुल'. ६. 'कुन्दकुसुमसुरभिशीतलम्', 'कन्दलसमशीतलपरिमलम्'. ७. 'रजनीविबुद्धै.'. ८. 'प्रयान्ति'. ९. 'समन्तादवलोक्य' इति क्वचिन्नास्ति १० 'रमणीयतरमवलोकय', 'रमणीयतरमवलोक्यते' ११. हस्तैर्भानो.'; 'भानोरुस्रै.'.

स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ८ ॥

**कञ्चुकी**—देव, नन्वेषा भानुमती सुवदनया तरलिकया च सहोपविष्टा तिष्ठति। तदुपसर्पतु देवः।

**राजा**—(दृष्ट्वा।) आर्य विनयंधर, गच्छ त्वं साङ्ग्रामिकं मे रथमुपकल्पयितुम्। अहमप्येष देवीं दृष्ट्वानुपदमागत एव।

**कञ्चुकी**—एष कृतो देवादेशः। (इति निष्क्रान्तः।)

**सखी**—पिअसहि, अवि सुमरिदं तुए।(क)

**भानुमती**—सहि, सुमरिदम्। अज्ज किल पमदवणे आसीणाए मम अग्गदो एव्व दिव्वरूविणा णउलेण अहिसदं वावादिदम्। (ख)

**उभे**—(अपवार्य। आत्मगतम्।) सन्तं पावम्। पडिहदं अमङ्गलम्। (प्रकाशम्।) तदो तदो। (ग)

---

(क) प्रियसखि, अपि स्मृतं त्वया।

(ख) सखि, स्मृतम्। अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम्।

(ग) शान्तं पापम्। प्रतिहतममङ्गलम्। ततस्ततः।

सहृदयेन। भानोर्भाभिस्तेजोभिः स्पृश्यमाना इति सबन्धः। 'गन्धपात्रे परिमलो विमर्दोत्थेऽपि दृश्यते' इति धरणिः। स्तोकमल्पम्। द्विरेफो भ्रमरः। नृपतिपक्षेऽपि सर्वं योज्यम् ॥८॥ साङ्ग्रामिकं युद्धे साधु ॥ सखि, स्मृतं त्वया ॥ सखि, स्मृतम्। अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम्। अत्र किल निश्चये। दिव्यरूपिणा सुन्दरेण। नकुलो 'नेउर' इति प्रसिद्धजन्तुः पाण्डवश्च। अहिशतं सर्पशतम्। अथ च शत्रुशतम् ॥ अपवार्य। शान्तं पापम्। प्रतिहतममङ्गलम्। अत्रापवार्य निभृतम्। प्रका-

---

१. 'महाराज, एषा देवी सुवदनातरलिकाभ्यां सह सुखोपविष्टा तिष्ठति' इति क्वचित्पाठः. २. पर्युपास्यमाना'. ३ 'एष' इति पुस्तकान्तरे नास्ति. ४. 'यथाज्ञापयति देवः' इति पाठः ५. 'भानुमती—सहि, सुमरिदम्। सखी—कहेदु पिअसही। भानुमती—अज्ज किल' इति पुस्तकान्तरे पाठः. ६. 'अग्गदो केणवि अदिसइदरूदिव्वरूवेण' इति पाठः. ७. 'सन्तं पावं सन्तं पावम्' इति पाठः.

**भानुमती**—अदिसंदावोविग्गहिअआए विसुमरिदं मए । ता पुणोवि सुमरिअ कहइस्सम् । (क)

**राजा**—अहो, देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा तिष्ठति । भवतु । अनेन लताजालेनान्तरितः शृणोमि तावदासां विश्रब्धालापम् । (तथा स्थित ।)

**सखी**—सहि, अलं संदावेण । कहेदु पिअसही । (ख)

**राजा**—किं नु खल्वस्याः संतापकारणम् । अथवानामन्त्र्य मामियमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या मया कोपः । अयि भानुमति, अविषयः खलु दुर्योधनो भवत्याः कोपस्य ।

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखं नाद्यासि संभाविता ।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो
दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ९ ॥

(विचिन्त्य ।) अथवा ।

---

(क) अतिसंतापोद्विग्नहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये ।

(ख) सखि, अलं संतापेन । कथयतु प्रियसखी ।

---

शमिति । 'यत्तु सर्वजनश्राव्यं प्रकाशं तन्निगद्यते' इति भरतः । ततस्तत ॥ अतिसंतापोद्विग्नहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये ॥ मन्त्रयमाणा मन्त्रं कुर्वती ॥ सखि, अलं संतापेन । कथयतु प्रियसखी ॥ **किं कण्ठ इति ।** निद्रायाश्छेदोऽवसानं तत्र विवर्तनं पार्श्वपरिवर्तनम् । संभाविता संमुखीकृता । संकथालापः । उपालम्भो विसंवादः ॥ ९ ॥

---

१ 'संदावावग्गहीदहिअआए पुणोवि मए विसुमरिदम्' इति बहुपुस्तकानां पाठः. २. 'राजा—(अवलोक्य ।) अहो' इति क्वचित्पाठः ३. 'इति तथा स्थितः'; 'इति तथा कृत्वा स्थितः.' ४ 'सखी—अलं संदावेण । कहेदु पिअसही', 'उभे—सहि, अलं संदावेण । कहेदु पिअसही'; 'सखी—अइ, अलं संदावेण । कहेदु पिअसही' इति नानाविधः पाठः. ५. 'मयि'. ६. 'कोपस्य' इत्यस्मादनन्तरं 'पश्य' इति क्वचिदधिकः पाठः. ७. 'अभिमुखी'.

इयमस्मदुपाश्रयैकचित्ता
मनसा प्रेमनिबद्धमत्सरेण ।
नियतं कुपितातिवल्लभत्वा-
त्स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥ १० ॥

[1]तथापि शृणुमस्तावत्किं नु वक्ष्यतीति ।

[2]**भानुमती**—तदो अहं तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा हिदहिअआ अ । तदो उज्झिअ तं आसणट्ठाणं लदामण्डवं पविसिदुं आरद्धा । (क)

[3]**राजा**—(सवैलक्ष्यम् ।) किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत्किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः । (सोत्प्रेक्षम् 'इयमस्मद्–' (२।१०) इति पठित्वा ।) मूढ दुर्योधन, कुलटाविप्रलभ्यमानमात्मानं बहु मन्यमानोऽधुना किं वक्ष्यसि । ('किं कण्ठे–'(२।९)इत्यादि पठित्वा । दिशोऽवलोक्य ।) अहो, एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनैसंकथासु च पक्षपातः । दुर्यो-

(क) ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । ततं उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ।

**इयमिति** । अपाश्रयः संश्रयः । तद्गततेति यावत् । मनसा करणभूतेनास्मदुपाश्रयैकचित्तेत्यन्वयः । निबद्धः निरस्तम् । 'मात्सर्यमपि मत्सरः' इत्यमरः ॥१०॥ ततोऽहं तस्यातिशयदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । ततं उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ॥ माद्रीसुतो नकुलः । 'विप्रलम्भो विसंवादः' इत्यमरः । 'कुलटा बन्धकीत्वरी' इत्यमरः । 'विविक्तौ पूतविजनौ' इत्यमरः ।

१ 'तथापि किं वक्ष्यतीति शृणुमस्तावत्' इति क्वचित्पाठः. २. 'भानुमती—हला, अहं तदो तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा । राजा—किं नाम' इति बहुपुस्तकानां पाठः. ३. 'राजा—किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता । तत्कथमनया माद्रीसुतानुरक्तया' इति पुस्तकान्तरे पाठः ४. 'किं न वक्ष्यसि'; 'किं किं न वक्ष्यसि'. ५. '('किं कण्ठे–' इत्यादि पठित्वा । दिशोऽवलोक्य।)' इति केषुचित्पुस्तकेषु नास्ति. ७. 'कथासु'.

धनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः । आः पापे [1]मत्परिग्रहपांसुले,

तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
श्लाघा सास्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः ।
तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः
ख्याते तस्मिन्वितमसि कुले [2]जन्म कौलीनमेतत् ॥ ११ ॥

**सखी**—तदो तदो । (क)

**भानुमती**—[3]तदो सोवि मं अणुसरन्तो एव्व लदामण्डवं पविट्ठो । (ख)

**राजा**—अहो, कुलटोचितम[4]स्याः [5]पापाया [6]अशालीनत्वम् ।

यस्मिंश्चिरप्रणयनिर्भरब[7]द्धभाव-
मावेदितो रहसि मत्सुरतोपभोगः ।
तत्रैव दुश्चरितमद्य निवेदयन्ती
[8]ह्रीणासि पापहृदये न सखीजनेऽस्मिन् ॥ १२ ॥

**उभे**—तदो तदो । (ग)

---

(क) ततस्ततः ।

(ख) ततः सोऽपि मामनुसरन्नेव लतामण्डप प्रविष्टः ।

(ग) ततस्ततः ।

---

बन्धकी वेश्या । सार. स्थैर्यम् । परिग्रहोऽत्र कलत्रम् । तत्र पांसुलासती । **तद्भीरुत्वमिति** । ईदृशानि परपुरुषगमनरूपाणि । व्युत्क्रमोऽतिक्रम । रागोऽनुराग । चापले चाञ्चल्ये । तव कोऽपि पन्था किमपि वर्त्म । सर्वत्र तवेत्यन्वय. । कौलीनमपवाद । 'कौलीन पशुभिर्युद्धे कुलीनत्वापवादयो.' इति विश्व. ॥११॥ तत सोऽपि मामनुरुध्यमानस्तमेव लतामण्डप प्रविष्ट ॥ अशालीनत्व निर्लज्जता । **यस्मिन्निति** । 'प्रणय प्रेम्णि विश्वासे' इति विश्व । इद क्रियाविशेषणम् । भावोऽभिप्राय । रहस्येकान्ते । ह्रीणा लज्जावती ॥ १२ ॥ ततस्तेन सप्रगल्भप्रसा-

---

१. 'अस्मत्परिग्रहपांसुले', 'मत्परिग्रहपासनि'. २ 'जन्म लोकापवाद.' इति क्वचित्पाठ . ३. 'तदो सोवि' इत्यस्मात्पूर्वं केषुचित्पुस्तकेषु 'तदो अह तुवरिद आसणट्ठाणं एव्व लदामण्डवं पविट्ठा' इत्यधिक पाठो वर्तते. ४ 'एतस्याः'. ५ 'पापशीलाया.'. ६ 'पापशीलत्वम्', 'दु.शीलत्वम्'. ७. 'बालभावम्'. ८. 'ह्रीतासि'.

**भानुमती**—तदो तेण [1]सप्पगब्भपसारिअकरेण अवहिदं मे त्थणंसुअम् । (क)

**राजा**—[2](सक्रोधम् ।) [3]अलमिदानीमतःपरमाकर्णनेन। भवतु तावत्तस्य परवनितावस्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि । (किंचिद्गत्वा। विचिन्त्य ।) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया ।(इति निवर्तते ।)

**उभे**—तदो तदो ।(ख)

**भानुमती**—[4]तदो अज्जउत्तस्स पभादमङ्गलतूररवमिस्सेण [5]वारविलासिणीजणसंगीदरवेण पडिबोधिदह्मि । (ग)

**राजा**—([6]सवितर्कम् ।) [7]किं नाम प्रतिबोधितास्मीति स्वप्नदर्शनमनया वर्णितं [8]भवेत् । अथवा सखीवचनादेव व्यक्तिर्भविष्यति ।

(उभे सविषादमन्योन्यं पश्यतः ।)

**सुवदना**—जं [9]एत्थ अच्चाहिदं तं भाईरहीप्पमुहाणं णईणं

---

(क) ततस्तेन सप्रगल्भप्रसारितकरेणापहृत मे स्तनांशुकम्।

(ख) ततस्ततः ।

(ग) तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसंगीतरवेण प्रतिबोधितास्मि ।

---

रितकरेण सर्पगर्भप्रसारितकरेण वापहृत मे स्तनांशुकम् ॥ अवस्कन्द आस्कन्द । जीवित जीवनम् ॥ तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसगीतरवेण प्रतिबुद्धास्मि। सखि सुवदने, कथय किमत्र प्रशस्त किं वाशुभसूचकमिति। अत्र 'आर्यपुत्रेति संबोध्य पतिं पत्नीजनेन तु' इति भरत. । वारविलासिनी वेश्या ॥ यदिहात्याहित तद्भागीरथीप्रमुखानां नदीनां जलेनापह्रियताम् । ब्राह्म-

---

१. 'सगव्व पसारिअकरेण अवहरिअ' २ 'राजा—(विचिन्त्य ।) सप्रगल्भप्रसारितकरेणापहृत मे स्तनांशुकम् । (सक्रोधम् ।) अल–'; अथवा 'राजा—(विचिन्त्य सगर्वम् ।) प्रसारितकरेणापहृतं मे स्तनांशुकम्। (सक्रोधम् ।) अल–' इति क्वचिदधिकः पाठः ३ 'अलमत पर श्रुत्वा' इति क्वचित्पाठ. ४ 'हला, तदो अह अज्जउत्तस्स' ५. 'वारविलासिणीसंगीदसद्देण'. ६ 'सवितर्कम्' इति क्वचिन्नास्ति. ७. 'किं नु खलु'; 'किं नाम खलु' ८. 'भवेद्' इत्यस्मादनन्तर '(विचिन्त्य ।) भवतु । सखीवचनाद्व्यक्तिर्भविष्यति' इति बहुपुस्तकाना पाठः. ९. 'किं वि'.

सलिलेण अवहारीअदु । [1]बह्मणाणं हुदाहुदिसुअन्धिणा ज्जलणेण अवहारीअदु । (क)

**राजा**—अलं विकल्पेन । स्वप्नदर्शनमेवैतदनया वर्णितम् । मया पुनर्मन्दधियाऽन्यथैव [2]संभावितम् ।

दिष्ट्यार्धश्रुतविप्रलम्भ[3]जनितक्रोधादहं नो गतो

दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम् ।

मां [4]प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता

मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥ १३ ॥

**भानुमती**—[5]हला, कहेहि किं एत्थ पसत्थं किं वा असुहसूअअं त्ति । (ख)

**सखी चेटी च**—(अन्योन्यमवलोक्य । अपवार्य ।) एत्थ णत्थि त्थोअं वि सुहसूअअम् । [6]तदो अलीअं कधअन्ती पिअसहीए अवराहिणी भविस्सम् । सो [7]दाणीं सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं

(क) यदिहात्याहित तद्भागीरथीप्रमुखानां नदीनां सलिलेनापह्रियताम् । ब्राह्मणानां हुताहुतिसुगन्धिना ज्वलनेनापह्रियताम् ।

(ख) हला, कथय किमत्र प्रशस्तं किं वाशुभसूचकमिति ।

णाना हुताहुतिसुरभिगन्धिना ज्वलनेनापह्रियताम् । अत्र अत्याहितमप्रशस्तम् ॥ **दिष्ट्येति** । दिष्ट्या हर्षेण । नो निषेधे । 'अमानोना निषेधवचना' इति कोषात् । प्रत्याययितु बोधयितुम् । अन्त गता समाप्ता ॥ १३ ॥ सखि, कथय किमत्र प्रशस्तं किं वाशुभसूचकमिति ॥ नास्त्यत्र स्तोकमपि शुभसूचकम् । तथाप्युपदिशन्त्यो वयं प्रतिष्ठामहे । ततोऽलीकं मन्त्रयन्त्य प्रियसख्या अपराधिन्यो भविष्याम । स इदानीं स्निग्धो जनो य पृष्ट सन्परुषमपि हित भणति । सर्वमे-

१. 'भअवदाण बह्मणाण वि आसीमाए आहुदिहुदेण पज्जलिदेण भअवदा हुदासणेण अ णस्सदु' इति बहुषु पुस्तकेषु पाठ ; कुत्रचित् 'अ णस्सदु' इत्यत्र 'अन्तरीअदु' इति पाठो वर्तते. २ एतदनन्तर '(सवैलक्ष्यहर्षम् ।)' इति क्वचित्कविवचन दृश्यते ३. 'वचनक्रो-धात्'. ४. 'प्रत्यापयितुम्' ५. 'हला, कहेहि किं एत्थ सुहसूअअ' इति बहुपुस्तकाना पाठ ६ 'जइ एत्थ अलीअ कहइस्स ता अवराहिणी भविस्सम्' इति बहुपुस्तकाना पाठः. ७. 'एव्व'.

भणादि। (प्रकाशम्।) सहि, सव्वं एव्व एदं असुहणिवेदणम्। ता देवदाणं पणामेण दुंजादिजणपडिग्गहेण अ अन्तरीअदु। णहु दाढिणो णेउलस्स वा दंसणं अहिसदवहं अ सिविणए पसंसन्ति विअक्खणाओ। (क)

**राजा**—अवितथमाह सुवदना। नकुलेन पन्नगशतवधः स्तनांशुकापहरणं च नियतमनिष्टोदर्कं तर्कयामि।

पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ १४ ॥

(वामाक्षिस्पन्दनं सूचयित्वा।) आः, ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावेदयन्ति। (सावष्टम्भम्।) अथवा भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु। गीतश्चायमर्थोऽङ्गिरसा।

ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिकं तथा।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ १५ ॥

(क) अत्र नास्ति स्तोकमपि शुभसूचकम्। ततोऽलीकं कथयन्ती प्रियसख्या अपराधिनी भविष्यामि। स इदानी स्निग्धो जनो यः पृष्टः परुषमपि हित भणति। सखि, सर्वमेवैतदशुभनिवेदनम्। तद्देवतानां प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तर्यताम्। न खलु दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतवध च स्वप्ने प्रशसन्ति विचक्षणाः।

वैतदत्यद्भुतनिवेदनम्। तथाप्यत्र यत्किमप्यत्याहित तद्देवताना प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तरीक्रियताम्। न पुनर्दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतव्यापादन च स्वप्ने प्रशसन्ति विचक्षणा। अत्र परुष निष्ठुरम्। अन्तरीक्रियता शाम्यताम्। इहाशीरलकार.। यदुक्त तत्रैव—'आशीरिष्टार्थशासनम्' इति। विचक्षणा पण्डिता.॥ अवितथ सत्यम्। पन्नग सर्प'। उदर्क उत्तरविशुद्धि। **पर्यायेणेति**। 'अकामानुमतौ कामम्' इत्यमर। इय शतसख्या पुनर्मा स्पृशतीत्यन्वय' ॥१४॥ आवहन्तीत्यत्र रूढिच्युतकदोषो नास्ति। विशेषगुणेषूद्भूतत्वादित्यवधेयम्। **ग्रहाणामिति**। सूर्यादिदशा स्वप्नोऽनिमित्तमकस्मादौत्पातिकमुत्पातवातादि-

१. 'दुव्वादिपडिग्गहेण'. २. 'णउलस्स अण्णस्स वा' इति क्वचित्पाठ.. ३ 'वि'. ४. 'स्तनाशुकाहरणमिति', 'स्तनाशुकाहरण च'. ५. 'अरिष्टोदर्कमस्माक तर्कयामि' इति क्वचित्पाठः. ६. 'आ. कथ'. ७. 'आवहन्ति'. ८ 'कम्पनेषु' ९. 'एवविधेषु कश्मलेषु' इति क्वचित्पाठः. १०. 'निमित्तान्यौपपातिका.', 'अनिमित्तान्युपयाचितम्', 'अनिमित्तोत्पादकम्'.

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि ।

**भानुमती**—हला सुवअणे, पेक्ख[1] दाव उदअगिरिसिहरन्तरविमु-क्करहवरो विअलन्तसंझाराअप्पसण्णदुरालोअमण्डलो[3] जादो भअवं दिवहणाहो । (क)

**सखी**—सहि[4], रोसाणिदकणअपत्तसरिसेण[5] लदाजालन्तरापडिद-[6]किरणनिवहेण पिञ्जरिदोज्जाणभूमिभाओ[7] पूरिदपडिण्णो विअ[8] रिउदुप्पे-[9]क्खणिज्जो जादो[10] भअवं सहस्सकिरणो । ता समओ दे कुसुमचन्दण-[11]गब्भेण अग्घेण पज्जुवट्ठादुम् । (ख)

---

(क) हला सुवदने, पश्य तावदुदयगिरिशिखरान्तरविमुक्तरथवरो विगलत्सन्ध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान्दिवसनाथः ।

(ख) सखि, रोषाणितकनकपत्रसदृशेन लताजालान्तरापतितकिरणनिवहेन पिञ्जरितोद्यानभूमिभागः पूरितप्रतिज्ञ इव रिपुदुःप्रेक्षणीयो जातो भगवान्सहस्रकिरणः । तत्समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम् ।

---

क्रमेते काकतालीयमतर्कितोपनत यथा स्यादेव फलन्ति । अतस्तेभ्य प्राज्ञा पण्डिता न बिभ्यति । न भय कुर्वन्तीत्यर्थ । तेभ्य इति 'भीत्रार्थानां भयहेतु' इति पञ्चमी ॥ १५ ॥ सुवदने, पश्य तावदुदयशैलशिखरान्तरविमुक्तरथबदरो विगलत्सध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान्दिवसनाथः ॥ सखि, रोसानितकनकपत्रसदृशेन लताजालान्तरवलितकिरणनिवहेन पिञ्जरितोद्यानभूमिभाग पूरितप्रतिज्ञ इव रिपुदु प्रेक्षणीयो जातो भगवान्सहस्रकिरण । तत्समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम् । अत्र रोसानितं निर्मलीकृतम् । पिञ्जरित कपिशीकृत । पर्युपस्थातुं पूजयितुम् ॥ हञ्जे तरलिके, उपनय मेऽर्घभा-

---

१. 'पेक्ख दाव' इति क्वचिन्नास्ति २. 'सिहरन्तरित' ३. 'विअलन्तसञ्झाराओ आमण्णदुरालोअमण्डलो', 'विअलिअसञ्झाराअप्पसण्णदुरालोअमण्डलो'. ४. 'भट्टिणि'. ५. 'रोसाण्णिदकण्णकन्तिसस्सिरीएण', 'रोसाण्णिदकण्णरअणकन्तिसस्सिरीएण' 'साणिदकणअरओसरिसेण', 'रोसरुणिदकणअरओसरिसेण'; 'कणअरओसरिसेण' इति नानाविध. पाठ . ६. 'लदाजालन्तरोपहिदकिरणजालेण'. ७. 'पिसङ्गीकिदोज्जाणभूमिभाओ'. ८. 'पूरिदपडिण्णो विअ' इति क्वचिन्नास्ति. ९. 'दुप्पेक्खणिज्जो'. १०. 'भअव सहस्सरस्सी सवुत्तो'. ११. 'लोहिदचन्दणकुसुमगब्भेण'.

**भानुमती**—हञ्जे तरलिए, उवणेहि मे अग्घभाअणं जाव भअवदो सहस्सरस्सिणो सवरिअं णिव्वट्टेमि । (क)

**चेटी**—जं देवी आणवेदि । (इति निष्क्रान्ता ।) (ख)

**राजा**—अयमेव साधुतरोऽवसरः समीपमुपगन्तुं देव्याः ।

(प्रविश्य ।)

**चेटी**—देवि, एदं अग्घभाअणम् । ता निव्वट्टीअदु भअवदो सहस्सरस्सिणो सवरिआ । (ग)

(राजोपसृत्य सञ्ज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति ।)

---

(क) हञ्जे तरलिके, उपनय मेऽर्घ्यभाजनं यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि ।

(ख) यद्देव्याज्ञापयति ।

(ग) देवि, एतदर्घ्यभाजनम् । तन्निर्वर्त्यतां भगवतः सहस्ररश्मेः सपर्या ।

---

जनं यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि । अत्र सपर्या पूजा ॥ यद्देव्याज्ञापयति ॥ देवि, एतदर्घभाजनम् । तन्निर्वर्त्यतां सहस्ररश्मेः सपर्या ॥ भगवन्नम्बरसरोवरैकसहस्रपत्र, पूर्वदिग्वधूमुखमण्डलकुङ्कुमविशेषक, सकलभुवनाङ्गनदी-

---

१ 'सहस्सकिरणस्स' २.'(इति निष्क्रम्य पुनः प्रविश्य ।)भट्टिणि,एदं अग्घभाअणम् । णिव्वट्टेदु भअवदो सहस्सरस्सिणो सवरिअम् । राजा—अयमेव साधुतरोऽवसरः प्रियासमीपमुपगन्तुम् । (इत्युपसर्पति ।) सखी—(विलोक्यात्मगतम् ।) कहं महाराओ आअदो । हन्त, जादो से णिअमभङ्गो । भानुमती—(दिनकराभिमुखी भूत्वा ।) भअवं अम्बरमहासरेक्कसहस्सपत्त पुव्वदिसावहूमुहमण्डणकुङ्कुमविसेसअ सअलभुवणेक्करअणप्पदीव जं एत्थ सिविणअदंसणे किं वि अच्चाहिदं तं भअवदो पणामेण सब्भादुअस्स अज्जउत्तस्स कुसलपरिणामी होदु । ( अर्घ्यं दत्त्वा । ) हञ्जे तरलिए, उवणेहि मे पुणोवि कुसुमाइं अवराणं वि देवदाणं सवरिअं णिव्वट्टइदुम् । (इति हस्तौ प्रसारयति ।) ( राजा सञ्ज्ञया परिजनमुत्सार्य पुष्पाणि स्वयमुपनयति । स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति च ।) भानुमती—(सरोषम् ।)' अहो पमादो परिअणस्स । (परिवृत्य दृष्ट्वा । ससम्भ्रमम् ।) कधं अज्जउत्तो ।' इति पृथग्विधः पाठः.

**सखी**—(स्वगतम् ।) कहं महाराओ समाअदो । हन्त, किदो से पिअसहीए णिअमभङ्गो रण्णा । (क)

**भानुमती**—(दिनकराभिमुखी भूत्वा ।) भअवं, अम्बरमहासरेक्कसहस्सपत्त, पुव्वदिसावहूमुहमण्डलकुङ्कुमविसेसअ, सअलभुवणाङ्गणदीवअ, एत्थ सिविणअदंसणे जं कि वि अच्चाहिदं तं भअवदो पणामेण कुसलपरिणामी ससदभादुअस्स अज्जउत्तस्स होदु । (अर्घ्यं दत्त्वा ।) हला, उवणेहि मे कुसुमाइं जाव अवराणं वि देवदाणं सवरिअं णिव्वट्टेमि । (हस्तौ प्रसारयति ।) (ख)

(राजा पुष्पाण्युपनयति । स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति ।)

**भानुमती**—(सरोषम् ।) अहो पमादो परिअणस्स । (परिवृत्य दृष्ट्वा । ससभ्रमम् ।) कधं अज्जउत्तो । (ग)

**राजा**—देवि, अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे । तत्प्रभवत्यनुशासने देवी ।

(क) कथ महाराजः समागतः । हन्त, कुतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा ।

(ख) भगवन्, अम्बरमहासरएकसहस्रपत्र, पूर्वदिशावधूमुखमण्डलकुङ्कुमविशेषक, सकलभुवनाङ्गनदीपक, अत्र स्वप्नदर्शने यत्किमप्यत्याहितं तद्भगवतः प्रणामेन कुशलपरिणामी सशतभ्रातृकस्यार्यपुत्रस्य भवतु । हला, उपनय मे कुसुमानि यावदपरासामपि देवताना सपर्या निर्वर्तयामि ।

(ग) अहो प्रमादः परिजनस्य । कथमार्यपुत्रः ।

पक, इह स्वप्नदर्शने यत्किमप्यत्याहितं तद्भगवतः प्रणामेन कुशलपरिणाम मम सशतभ्रातृकस्यार्यपुत्रस्य भवतु । हला, उपनय मे कुसुमानि । अपरासामपि देवताना सपर्या निर्वर्तयामि । अत्र सहस्रपत्रं कमलम् । विशेषकस्तिलक । 'अङ्गन चत्वराजिरे' इत्यमर. । अत्र णत्वविधायकसूत्राभावाद्नकारान्तत्वमेवेत्यवधेयम् ॥ कथ महाराज. समागत । हञ्जे, कुतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा ॥ अहो प्रमाद परिजनस्य । कथमार्यपुत्र ॥ अनिपुणोऽकुशल. ॥

१. '(दिनकराभिमुखीभूय ।)'. २. '(राज्ञः पुष्पाण्युपनयतः स्पर्शाद्धस्तादर्घ्यपात्र भूमौ पतति ।)' इति क्वचित्पाठ., '(दुर्योधनः पुष्पाण्युपनयति । भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति ।)' इत्यपि क्वचित्पाठो दृश्यते. ३. '(परिवृत्य, राजानमवलोक्य, ससाध्वसं लज्जा नाटयति ।)' इति पाठः. ४. 'तथा प्रभवति'.

(भानुमती लज्जां नाटयति ।)[1]

**राजा**—अयि प्रिये,

विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः
परिजनपथवर्तिन्यत्र किं संभ्रमेण ।
स्मितमधुरमुदारं देवि[2] मामालपोच्चैः
प्रभवति मम पाण्योरञ्जलिस्त्वं स्पृशास्मान् ॥ १६ ॥[3]

**भानुमती**—अज्जउत्त, अब्भणुण्णादाए तुए अत्थि मे कस्सि वि णिअमे अहिलासो । (क)[4]

**राजा**—श्रुतविस्तर एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति । तदल-मेवं प्रकृतिसुकुमारमात्मानं खेदयितुम् ।[5]

**भानुमती**—अज्जउत्त, मे सङ्का बाहेइ । ता अणुमण्णदु मं अज्ज-उत्तो । (ख)[6]

**राजा**—(सगर्वम् ।) देवि, अलमनया शङ्कया । पश्य ।

(क) आर्यपुत्र, अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः ।

(ख) आर्यपुत्र, मा शङ्का बाधते । तदनुमन्यतां मामार्यपुत्रः ।

**विकिरेति** । विकिर विक्षिप । अपाङ्ग नेत्रप्रान्त । तत्र संसर्पि गमनशीलम् । परिजनपथवर्तिनि सेवकमार्गस्थिते मयि । किं संभ्रमेणोद्वेगेन । स्मितमधुरमुदारं मनोहरं च यथा स्यादेवं हे देवि, मामालप ब्रूहि । मम पाण्योरञ्जलिरुच्चैः प्रभवतु । अयमञ्जलिर्बद्ध इत्यर्थः । अतोऽस्मास्त्वं स्पृश । स्पर्शमपि मम विधेहीत्यर्थः । पाण्योरञ्जलिरित्यत्रार्थपौनरुक्त्यं न देश्यम् । उक्तपोषाल-कारेण तदुद्धारात् ॥ १६ ॥ आर्यपुत्र, अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः ॥ आर्यपुत्र, मा शङ्का बाधते । तदनुमन्यतां मामार्यपुत्रः ॥

१. '(भानुमती लज्जां नाटयति ।)' इति क्वचिन्नास्ति २ 'भीरु'. ३. 'प्रभवति मम पाण्योरञ्जलिं सेवितुं त्वाम्' इति पाठः ४ 'अब्भणुजाणादु मं महाराओ । अत्थि मे' इति बहुपुस्तकानां पाठः ५ 'तदलं प्रकृतिसुकुमारमात्मानम्', 'तदल-मेनं प्रकृतिसुकुमारमात्मानम्', 'तदलमेव प्रकृतिसुकुमारमात्मानम्'; 'तदलं प्रकृति-सुकुमारमेवात्मानम्' इति नानाविधः पाठः. ६. 'अज्जउत्त, अदिमेत्तं मं सङ्का बाहेइ' इति पाठः.

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु भ्रातृशतस्य [1]या भुजवनच्छायासुखोपास्थिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥ १७ ॥

**भानुमती**—अज्जउत्त, [2]ण हु मे किं वि आसङ्काकालणं तुम्हेसु सण्णिहिदेसु । किं तु अज्जउत्तस्स [3]एव्व मणोरहसंपत्तिं अहिणन्दामि । (क)

**राजा**—अयि सुन्दरि, एतावन्त एव मनोरथा [4]यदहं दयितया संगतः स्वेच्छया विहरामीति । पश्य ।

[5]प्रेमाबद्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा ।
वक्त्रेन्दुं ते [6]नियममुषितालक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं [7]नु दुर्योधनस्य ॥ १८ ॥

(नेपथ्ये महान्कलकलः । सर्वे आकर्णयन्ति ।)

---

(क) आर्यपुत्र, न खलु मे किमप्याशङ्काकारणं युष्मासु संनिहितेषु । किंत्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि ।

---

**किं नो व्याप्तेति** । अक्षौहिणी संख्याभेदः । किं द्रोणेनेत्यादौ फलमित्यनुषज्यते । अङ्गराजः कर्णः । क्लाम्यसि परिश्राम्यसि । हे भीरु ॥ १७ ॥ आर्यपुत्र, न खलु मे किमप्याशङ्काकारणं युष्मासु संनिहितेषु । किंत्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि ॥ दयिता कान्ता । **प्रेमेति** । एतादृशं वा तव वक्त्रेन्दुं पातुं दुर्योधनस्य किं वाञ्छा न । अपि तु वाञ्छैव । कीदृशम् । प्रेम्णाबद्धं संबद्धमत एव स्तिमितं निश्चलं यन्नयनं तेनापीयमानं यदब्जं तद्वच्छोभा यस्य तत् । लज्जासंबन्धादस्वच्छकथमत्यल्पहासं च । नियमान्मुषितं परवासीभूतमलक्तकं यत्र तादृशोऽग्राधरो यत्र । परमतिशयेनासुलभं दुर्लभम् ।

---

१. 'मे भुजवनच्छाया सुखोपास्थिता' इत्यपि पाठः. २. 'ण हि किं वि मे सङ्काकालणम्' इति बहुपुस्तकानां पाठः. ३. 'एव्व'; 'ज्जेव'. ४. 'यदहं वनितया संगतः', 'यदहं समागतस्त्वया'. ५. 'प्रेमावस्थ-', 'प्रेमाबन्ध-' ६. 'नियतमुषितालक्तकाग्राधरं'; 'नियममुषितालक्तकाङ्काधरं'; 'नियममुषितालक्तताम्राधरं'. ७. 'तु'; 'न'.

**भानुमती**—(संभय राजानं परिष्वज्य ।) परित्ताअदु परित्ताअदु अज्जउत्तो । (क)

**राजा**—(समन्तादवलोक्य ।) प्रिये, अलं संभ्रमेण । पश्य ।

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरिक्षे
झाङ्कारी शर्करालः पथिषु विटपिनां स्कन्धकाषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु किं संभ्रमेण ॥१९॥

**सखी**—महाराअ, आरोहीअदु एदं दारुपव्वअपासादम् । उव्वेअकारी क्खु अअं उत्थिदपरुसरअकलुसीकिदणअणो उम्मूलिदतरुवरसद्दवित्तत्थमन्दुरापरिब्भट्ठवल्लहतुलङ्गमपज्जाउलीकिदजणपद्धइ भीसणो समीरणो । (ख)

---

(क) परित्रायतां परित्रायतामार्यपुत्रः ।

(ख) महाराज, आरुह्यतामेतद्दारुपर्वतप्रासादम् । उद्वेगकारी खल्वयमुत्थितपरुषरजःकलुषीकृतनयन उन्मूलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिर्भीषणः समीरणः ।

---

अन्यतरुणानामिति शेषः ॥ १८ ॥ परित्रायतां परित्रायतां मामार्यपुत्रः ॥ न खलु शब्दो निषेधे । **दिक्ष्विति** । हे भीरु, किं सभ्रमेण भयेन । एतादृशः समीरो वायुः परिदिशं प्रतिदिशं वहति यतः । कीदृशः । दिक्षु व्यूढं सबद्धमङ्घ्रिपस्य पादपस्याङ्गं येन स तथा । अन्तरिक्षे व्योम्नि तृणेन जटिलो व्याप्तश्चलत्पांशुदण्डो दण्डाकारकधूलिर्यस्मात्स तथा । झाङ्कारोऽव्यक्तशब्दस्तद्युक्तः । शर्करालः पथिषु शर्करायुक्तः । सिध्मादित्वान्मत्वर्थीयो लच्प्रत्ययः । विटपिनां वृक्षाणां स्कन्धकषणैर्धूमसहितः । प्रासादानां धवलगृहाणां मध्येषु नवजलधरोद्गमगम्भीरवत् प्रचण्डोपक्रमः । अङ्घ्रिश्चरणस्तेन पिबति जलादिकमित्यङ्घ्रिपः । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । कषणं काषः । भावे घञ् ॥ १९ ॥ महाराज, आरुह्यतामेतद्दारुपर्वतप्रासादम् । उद्वेगकारी खल्वुद्धूतपरुषरजःकलुषीकृतनयन उन्मूलितस्खलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्या-

---

१. 'संभय' इति क्वचिन्नास्ति. २. 'व्याक्षिप्तपर्णः', 'व्यूढाङ्घ्रिपादः'. ३. 'महाराओ पविसदु'. ४. 'उच्छेअकारी'. ५. 'उत्थिदो परुसरअ–'; 'उद्धूदपांसुपसरो'. ६. 'विदलिदतरुवर–' ७. 'तुलङ्गमो'. ८. 'समीरणासारो'.

**राजा**—(सहर्षम्।) उपकारि खल्विदं वात्याचक्रं सुयोधनस्य । यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या संपादितोऽस्मन्मनोरथः । कथमिति ।

न्यस्ता न भ्रुकुटिर्न बाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।
तन्व्या मग्नपयोधरं भयवशादाबद्धमालिङ्गितं
भङ्गास्या नियमस्य भीषणमरुन्नायं वयस्यो मम ॥ २० ॥

तत्संपूर्णमनोरथस्य मे कामचारः संप्रति विहारेषु । तदितो दारुपर्वतप्रासादमेव गच्छामः ।

(सर्वे वात्याबाधा रूपयन्त परिक्रामन्ति ।)

**राजा**—

कुरु घनोरु पदानि शनैः शनैरयि विमुञ्च गतिं परिवेपिनीम् ।
सुतनु बाहुलतोपरिबन्धनं मम निपीडय गाढमुरःस्थलम् ॥२१॥

---

कुलीकृतजनपद्धतिर्भीषण: समीरण: । अत्र दारुपर्वत: काष्ठरचनाभेद: पर्वताकार: । यद्वा । दारुपर्वत इति क्रीडापर्वतनाम । स्खलित इतस्ततो भ्रष्ट: । 'वाजिशाला तु मन्दुरा' इत्यमर: । वल्लभो गूकाखण्डस्थ. (?) । पद्धतिर्वर्त्म ॥ चक्रं समूह: । **न्यस्तेति** । अयं भीषणमरुन्मम वयस्यो मित्रं न । अपि तु मित्रमेव । यतोऽस्या नियमस्य भङ्गा भञ्जक: । नियमभङ्गानेवाह—भ्रुकुटिर्न न्यस्ता न कृता । न वा नेत्रजलेन नेत्रे छन्नम् । अन्यत्र मुखं न । कृतम् । सशपथं स्पृशन्नहं न वारित: । यदि मां स्पृशसि तदैव ते शपथ इति न कृतमित्यर्थ: । तन्व्येति सर्वत्रान्वीयते । मग्नपयोधरं सबद्धस्तनं यथा स्यादेवं भयवशादालिङ्गितमालिङ्गनमाबद्धं कृतम् । एतानि भयात्तया कृतानीति मरुत उपकारकतेति भाव: । यद्वा । अयं भीषणमरुन्न । किं तु मम वयस्य इति योजना । मैत्रं च तत्तत्क्रियाभिरुन्नेयम् ॥ २० ॥ कामचार: स्वेच्छा ॥ **कुर्विति** । हे घनोरु निबिडोरुप्रदेशे । परिवेपिनीं कम्पवतीम् । हे सुतनु शोभनशरीरे । ममोर:स्थलं गाढं दृढं निपीडय । बाहुलतयोपरिबन्धनं यथा स्यादेवम् ॥ २१ ॥

---

१ '(सहर्षम्।)' इति क्वचिन्नास्ति. २. 'मुग्नपयोधरं'; 'लग्नपयोधरं'. ३. 'आरब्धमालिङ्गितुम्'. ४ 'नु मे'. ५ 'दारुपर्वतमेव'. ६. '(वात्याबाधा रूपयन्तो यत्नत: परिक्रामन्ति ।)' इत्यपि पाठ:. ७. 'अपि'. ८. 'पतसि'. ९. 'बाहुलतोपनिबन्धनम्'.

(प्रवेशं रूपयित्वा ।) प्रिये, [1]अलब्धावकाशः समीरणासारः स्तिमितत्वाद्गर्भगृहस्य । विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम् ।

**भानुमती**—(सहर्षम् ।) [2]दिट्ठिआ इह दाव उप्पादसमीरणो ण बाधेइ । (क)

**सखी**—[3]आरोहणसंभमणिस्सहं पिअसहीए ऊरुजुअलम् । ता कीस दाणीं महाराओ आसणवेदीं ण [4]भूसेदि । (ख)

**राजा**—(देवीमवलोक्य ।) भवति, अनल्पमेवापकृतं वात्यासंभ्रमेण । तथाहि ।

रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं [5]दुनोति ।
ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्धतेऽस्या
वात्या खेदं [6]मृगाक्ष्याः सुचिरम[7]वयवैर्दत्तहस्ता करोति ॥ २२ ॥

---

(क) दिष्ट्येह तावदुत्पातसमीरणो न बाधते ।

(ख) आरोहणसम्भ्रमनिःसह प्रियसख्या ऊरुयुगलम् । तत्कस्मादिदानी महाराज आसनवेदी न भूषयति ।

---

आसारः समूहः । स्तिमितत्वं निबिडत्वम् । गर्भगृहं 'गभहर' इति प्रसिद्धम् । विस्रब्धं कृतविश्राममिति क्रियाविशेषणम् ॥ दिष्ट्येह तावदुत्पातमारुतो न बाधते ॥ आरोहणसम्भ्रमनिःसहं प्रियसख्या ऊरुयुगलम् । तत्किंनिमित्तं महाराज आसनवेदीं न भूषयति । सम्भ्रमेणादरेण निःसहं निश्चलम् ॥ **रेणुरिति** । नेत्रयोरायतत्वाद्दैर्घ्यात्तनुरप्यल्पोऽपि रेणुर्बाधां पीडां विधत्ते । अल्पोऽप्येष कम्प उरो वक्षःस्थलं दुनोति पीडयति । भरितमिति 'तारकादित्वादितच्' इति साधनीयम् । अन्यथा भृतमिति स्यादित्यवधेयम् । ऊर्वोराधारभूतयोर्वेपथुः कम्पो मन्देऽप्यल्पेऽपि याते गमने सति वर्धत इत्यन्वयः । अतो हेतोर्वायुर्मृगाक्ष्याः खेदं करोति । कीदृशः । अवयवैः शरीरावयवैर्नयनादिभिर्दत्तहस्तः कृतसाहित्यः

---

१. 'लब्धान्तरः समीरणः संवृतत्वाद्गर्भगृहस्य'; 'अलब्धावकाशः समीरणः संवृतत्वाद्गर्भगृहस्य'. २. 'दिट्ठिआ उप्पादसमीरणासारो ण बाधेइ' इति पाठः. ३. 'आरोहण—' इत्यस्मात्पूर्वम् 'महाराअ' इत्यधिकः पाठो बहुपुस्तकेषु दृश्यते. ४. 'अणुभूसेदि'. ५. 'तनोति'. ६. 'कृशाङ्ग्याः'. ७. 'अवयवैरित्थमाविष्करोति'.

(सर्वे उपविशन्ति ।)

**राजा**—तत्किमित्यनास्तीर्णं[1] कठिनशिलातलमध्यास्ते देवी[2] ।

लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव [3]चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥ २३ ॥

(प्रविश्य पटाक्षेपेण सम्भ्रान्तः[4])

**कञ्चुकी**—देव, भग्नं भग्नम् ।

(सर्वे साकूतं पश्यन्ति ।)

**राजा**—केन[5] ।

[6]**कञ्चुकी**—भीमेन[7] ।

**राजा**—कस्य ।

**कञ्चुकी**—भवतः ।

**राजा**—आः, किं प्रलपसि ।

---

इत्यर्थः । उभाभ्यामेव पीडा देव्या इति भावः ॥ २२ ॥ अनास्तीर्णं वस्त्रादिनानाच्छादितम् । **लोलेति** । हे करभोरु, तव जघनस्थलस्याध्यासितुं जघनस्थलस्याश्रयणाय ममोरुयुग्मं पर्याप्तमेव शक्तमेव । कीदृशस्य । चपलवस्त्रस्य । मदीयनेत्रमित्रस्य । कीदृशम् । वाताकुलिताशुकान्तम् । त्वदीयदृष्टिहरणशीलं च । जघनस्थलस्येत्यत्र 'शेषे षष्ठी' इति सूत्रेण षष्ठी । 'करस्य करभो बहिः' इत्यमरः ॥ २३ ॥ इह लोलेत्यादि भग्नमित्यन्तेन छलसंविरुक्ता । 'इष्टार्थयुक्तं यद्वाक्यं भाषतेऽर्थमभीप्सितम् । वाक्यान्तरेण संयोगाच्छलोऽयमभिधीयते ॥' इति भरतः ॥ साकूतं साभिप्रायम् ॥ किं नामेति । नाम प्राकाश्ये । किं तदिति

---

१. 'कठिन शिलातलम्'. २. 'देवी' इत्यस्मादनन्तरं 'यतः' इत्यधिकः क्वचित्पाठः. ३. 'चिरात्'. ४. 'सातङ्कम्', 'सभयम्'. ५. 'किं नाम'. ६. 'कञ्चुकी—देव, भग्नं भीमेन'; 'कञ्चुकी—देव, भीमेन' इति वा पाठः. ७. 'भीमेन' इत्येतस्मादनन्तरं 'राजा—आः, किं प्रलपसि । भानुमती—अज्ज, किं अणत्थं मन्तेसि । कञ्चुकी—(सभयम् ।) देव, कथयामि सर्वम् । भग्नं भीमेन भवतो मरुता' एवंविधः केषुचित्पुस्तकेषु पाठो दृश्यते.

**भानुमती**—अज्ज, किं अणिट्टं मन्तेसि। (क)

**राजा**—धिक्प्रलापिन्, वृद्धापसद, कोऽयमद्य ते व्यामोहः।

**कञ्चुकी**—देव, न खलु कश्चिद्व्यामोहः। सत्यमेव ब्रवीमि।

भग्नं भीमेन भवतो मरुता रथकेतनम्।
पतितं किङ्किणीक्काणबद्धाक्रन्दमिव क्षितौ ॥ २४ ॥

**राजा**—[१]बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः। तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति।

**कञ्चुकी**—देव, न किंचित्। किं तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति।

**भानुमती**—[२]अज्जउत्त, अन्तरीअदु एदं पसण्णबह्मणवेअघोसेण। (ख)

**राजा**—(सावज्ञम्।) [३]ननु गच्छ। पुरोहितसुमित्राय निवेदय।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रान्तः।)

(प्रविश्य)

**प्रतीहारी**—(सोद्वेगमुपसृत्य।) [४]जअदि जअदि महाराओ।

---

(क) आर्य, किमनिष्टं मन्त्रयसे।

(ख) आर्यपुत्र, अन्तर्यतामेतत्प्रसन्नब्राह्मणवेदघोषेण।

---

प्रकाशयेत्यर्थ ॥ आर्य, किमनार्यं कथयसि ॥ **भग्नमिति**। भीमेन मरुता वायुना, अथ च भीमसेनेन। मरुता वायुपुत्रेण। मरुतेत्यत्र 'आत्मा वै जायते पुत्रः' इत्यभेदोपचाराद्वा तद्धितलोपाद्वा साधुतेत्यवधेयम्। केतनं चिह्नम्। किङ्किणीक्काण' क्षुद्रघण्टिकाशब्द ॥ २४ ॥ स्यन्दनो रथस्तस्य केतुश्चिन्हम् ॥ आर्यपुत्र, अन्तरीयतामेतत्प्रसन्नब्राह्मणवेदघोषेण ॥ जयति जयति महाराज'।

---

१. 'यदि बलवत्समीरणयोगात्' इत्यपि पाठ. २. 'अज्जउत्त, पडिहरीअदु एदं अणिमित्तं पसण्णबह्मणवेआणुघोसेण होमेण अ' इति बहुपुस्तकाना पाठः; 'पसण्णबह्मणवअणमङ्गलवअणसमुग्घोसेण' इत्यपि क्वचित्पाठ., ३. 'किं तु सूतपुरोहिताय सुमित्राय निवेदय' इति पाठः. ४. 'जअदु जअदु महाराओ। महाराअ, एसा क्खु जामादुणो सिन्धुराअस्स मादा दुस्सला अ पडिहारभूमीए चिट्ठदि' इति बहुपुस्तकानां पाठ..

महाराअ, महादेवी क्खु एसा सिन्धुराअमादा दुस्सला अ पडिहार-भूमीए चिट्ठदि[१]। (क)

**राजा**—(किंचिद्विचिन्त्यात्मगतम् ।) किं जयद्रथमाता दुःशला चेति । क[२]च्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न किंचिद[३]त्याहितमाचेष्टितं भवेत् । (प्रकाशम् ।) गच्छ । प्रवेशय शीघ्रम् ।

**प्रतीहारी**—जं दे[४]वो आणवेदि । (इति निष्क्रान्ता ।) (ख)

(ततः प्रविशति सम्भ्रान्ता जयद्रथमाता दुःशला च ।)

(उभे सास्रं दुर्योधनस्य पादयोः पततः ।)

**माता**—परित्ताअदु परित्ताअदु कु[५]मालो । (ग)

(दुःशला रोदिति ।)

**राजा**—(ससम्भ्रमम[६]ुत्थाप्य ।) अम्ब, समाश्वसिहि समाश्वसिहि । किमत्याहितम् । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ।

**माता**—जाद, कु[७]दो कुसलम् । (घ)

**राजा**—[८]कथमिव ।

---

(क) जयति जयति महाराजः । महाराज, महादेवी खल्वेषा सिन्धुराज-माता दुःशला च प्रतीहारभूमौ तिष्ठति ।

(ख) यद्देव आज्ञापयति ।

(ग) परित्रायतां परित्रायतां कुमारः ।

(घ) जात, कुतः कुशलम् ।

---

महाराज, महादेवी खल्वेषा सिन्धुराजमाता दुःशला च प्रतीहारभूमौ तिष्ठति । अत्र सिन्धुराजो जयद्रथः । प्रतीहारभूमिर्द्वारम् ॥ अत्याहितमनर्थं ॥ यद्देव आज्ञापयति ॥ परित्रायतां परित्रायतां कुमारः ॥

---

१. '(स्वगतम् ।)' २. 'क्वचित्'. ३ 'कच्चित्'. ४. 'महाराओ'. ५. 'कुरुणाहो'. ६. 'उत्थाय'. ७. 'कुदो एत्थ कुसलम्'. ८. 'कथमिव' इत्यत्र 'राजा—अम्ब, किं जातम्' इति क्वचित्पाठः.

**माता**—(साशङ्कम् ।) अज्ज क्खु पुत्तवहामरिसिदेण[1] गण्डीविणा अणत्थमिदे दिवहणाहे तस्स वहो पडिण्णादो । (क)

**राजा**—(सस्मितम् ।) इदं तदश्रुकारणमम्बाया[2] दुःशलायाश्च । पुत्रशोकादुन्मत्तस्य[3] किरीटिनः प्रलापैरेवमवस्था । अहो मुग्धत्वमबलानां नाम[4] । अम्ब[5], कृतं विषादेन । वत्से दुःशले, अलमश्रुपातेन । कुतश्चायं तस्य[6] धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् ।

**माता**—जाद, जाद, दे[7] हि पुत्तबन्धुवहामरिसुद्दीविदकोवाणला अणपेक्खिदसरीरा[8] वीरा परिक्कमन्ति । (ख)

**राजा**—(सोपहासम् ।) एवमेतत् । सर्वजनप्रसिद्धैवामर्षिता[9] पाण्डवानाम् । पश्य ।

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो[10] गौर्गौरिति व्याहृता ।
तस्मिन्नेव ततज्यगाण्डिवधरो[11] नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥ २९ ॥

---

(क) अद्य खलु पुत्रवधामर्षितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः ।

(ख) जात, जात, ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति ।

---

पुत्रबन्धुवधामर्षितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वध प्रतिज्ञात' ॥ पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीरा' सचरन्ति ॥ अमर्षिता क्रोधशालिता । **हस्ताकृष्टेति** । ममाज्ञयेत्यन्वय । व्याहृतेति णिज्गर्भम् । तेन व्याहारितेत्यर्थ' । राजवधूना गौर्गौरित्यभिधानमतिहानिकरमिति समाचारः ।

---

१. 'पुत्तवहामरिसुद्दीविदेण'. २. 'अश्रुकारणम्' ३. 'उन्मत्तस्य' ४. 'नाम' इति क्वचिन्नास्ति. ५. 'अम्ब' इति क्वचिन्नास्ति. ६. 'अस्य'. ७. 'जाद, जदो अ बन्धुवहामरिसुद्दीविदकोवाणला' इति पाठ . ८. 'अणवेक्खिदसरीरा'; 'अणवेक्खिदसरीरावरणा'. ९. 'प्रसिद्धमेवामर्षित्वम्'. १०. 'राजचक्रमभितः'; 'राजचक्रसमितौ' ११. 'ततज्यकार्मुकधरः'; 'स किं नु गाण्डिवधर'

**माता**—[1]असमत्तपडिण्णाभारस्स आप्पवहो से पडिण्णादो । (क)

**राजा**—यद्येवमलमानन्दस्थानेऽपि ते विषादेन । [2]ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति । [3]अन्यच्च मातः, [4]का शक्तिरस्ति धनंजयस्यान्यस्य वा कुरुशतपरिवारवर्धितमहिम्नः कृपकर्णद्रोणाश्वत्थामादिमहारथ[5]पराक्रमद्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य । अयि सुतपराक्रमानभिज्ञे,

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन ।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः ॥ २६ ॥

**भानुमती**—अज्जउत्त, जइवि एव्वं तहवि [6]गुरुकिदपडिण्णाभारो ट्ठाणं क्खु सङ्काए । (ख)

---

(क) असमाप्तप्रतिज्ञाभारस्यात्मवधोऽस्य प्रतिज्ञातः ।

(ख) आर्यपुत्र, यद्यप्येव तथापि गुरुकृतप्रतिज्ञाभार: स्थान खलु शङ्कायाः ।

तस्मिन्काले तता विस्तृता ज्या पतञ्चिका यत्र तादृश गाण्डीव धनुर्यस्य स. । 'गण्डीवमपि गाण्डीवम्' इति शब्दभेद. । पृथानन्दनोऽर्जुनः । आस्पद स्थानम् ॥२५॥ असमाप्तप्रतिज्ञाभारस्यात्मवधस्तेन व्यवसित ॥ परिवारोऽनुचरः । निरावरणमन्तरायशून्यम् । **धर्मात्मजमिति** । धर्मात्मजो युधिष्ठिर । यमौ नकुलसहदेवौ प्रतीत्यन्वय । भीमार्जुनयोर्मध्ये एकोऽपि क सिन्धुराजमभियोद्धु समर्थ. । अपि तु न कोऽपि । विस्फुरित मण्डलाकार चापचक्र यस्य तम् ॥ २६ ॥ यद्यप्येव तथापि गुरुकृतप्रतिज्ञाभार स्थानं खलु शङ्काया ॥

---

१. 'असमत्तपडिण्णाभरेण आप्पवहो तेण पडिण्णादो', 'जाद, असम्पत्तीए पटिण्णाभारस्स आप्पवहो से पडिण्णादो' इति पाठान्तरे. २. 'ननु व्यक्त वक्तव्यम्'. ३. 'अन्यच्च' इति क्वचिन्नास्ति. ४. 'न'. ५. 'पराक्रम' इति क्वचिन्नास्ति. ६. 'गुरुकिदपडिण्णाभरो वणजओ त्ति णट्ठाण'; 'गुरुकिदपडिण्णाभरो धणजओ णिदाण क्खु सङ्काए'.

**माता**—साहु, कालोइदं भणिअं भाणुमदीए। (क)

**राजा**—आः, ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः। पश्य।

कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः संपतन्ति ॥२७॥

अपि च भानुमति, विज्ञातपाण्डवप्रभावे, किं त्वमप्येवमाशङ्कसे। पश्य।

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥ २८ ॥

कः कोऽत्र भोः। जैत्रं मे रथमुपकल्पय तावत्। यावदहमपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि।

---

(क) साधु, कालोचितं भणितं भानुमत्या।

---

साधु, कालोचितं भणितं भानुमत्या ॥ **कोदण्डेति**। कोदण्डो धनुः। कङ्कटेन सनाहेनाभिन्नमुन्मुक्तः देहः येषाम्। तथा चात्मगौरवात्सनाहमकुर्वाणैरित्यर्थः। आतपत्रैः छत्रैः तैः करणभूतैः श्वेतकमलवनभ्रमं कुर्वद्भिः। दन्तुरा निम्नोन्नताः। बलानां कोटयः सख्याभेदाः प्रदेशा वा। सपतन्ति गच्छन्ति। 'कोटिरग्रे प्रकर्षे च सख्यापार्श्वप्रदेशयोः' इति विश्वः। 'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः ॥ २७ ॥ **दुःशासनेति**। 'रक्तक्षतजशोणितम्' इत्यमरः ॥ २८ ॥ जैत्रं जयशालिनम्। अशस्त्रपूतमशस्त्रकृतम् ॥

---

१. 'जादे, साहु, कालोइदं तुए मन्तिदम्' इति पाठः. २ 'ज्याततज्यैः'. ३. 'कङ्कटामुक्तदेहैः', 'कङ्कटाबद्धदेहैः'. ४ 'ध्वस्तार्कभासाम्'. ५. 'चमूनाम्'. ६. 'अयि भानुमति'. ७. 'अविज्ञातपाण्डवप्रभावे'. ८ 'आशससे'. ९. 'उपपादय'. १०. 'तस्य मिथ्याप्रतिज्ञाप्रगल्भस्य पाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसपादितम्'; 'तस्य प्रगल्भपाण्डवस्य मिथ्याप्रतिज्ञावैलक्ष्य सपादयन्'; 'तस्याप्रगल्भस्य मिथ्याप्रतिज्ञावैलक्ष्यसपादितम्' इति पृथग्विधः पाठः.

(प्रविश्य)

**कञ्चुकी**—देव,

उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः ।
सज्जोऽयं नियमितवल्गिताकुलाश्वः[1]
शत्रूणां क्षपितमनोरथो रथस्ते ॥ २९ ॥

**राजा**—देवि, प्रविश त्वमभ्यन्तरमेव । ('यावदहमपि तस्य प्रगल्भपाण्डवस्य-' इत्यादि पठन्[2] परिक्रामति ।)

(इति निष्क्रान्ताः सर्वे ।)

## इति द्वितीयोऽङ्कः ।

---

**उद्घातेति** । उद्घात आघात । तेन क्वणित शब्द । यद्वा 'स्यादभ्यादानमुद्घात आरम्भ' इत्यमर. । तेनोद्घात उपक्रम इत्यर्थ । प्रालम्बो लम्बितो हार । प्रहासः प्रकाश । नियमितो वल्गितेन गतिविशेषेणाकुलितोऽश्वो यत्र स तथा ॥ २९ ॥ अत्राङ्के नायिकाचेट्योर्भाषा सौरसेनी । तदुक्त तत्रैव—'नायिकाया च चेट्या च तथा चैव विदूषके । सौरसेनी समाश्रित्य भाषा योज्या तु नाटके ॥' इति । एवमन्यत्रापि ॥

असूत य रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धर तस्य कृतौ गतोऽयमङ्को द्वितीयो वरटिप्पनेऽत्र ॥

## इति द्वितीयोऽङ्कः ।

---

१. 'वल्गुवल्गिताश्व.'. २ 'पठित्वा'.

## तृतीयोऽङ्कः ।

(ततः प्रविशति विकृतवेषा राक्षसी ।)

**राक्षसी—**(विकृतं विहस्य । सपरितोषम् ।)

हदमाणुशमंशभालए[1] कुम्भशहश्शवशाहि शंचिए[2] ।

अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु ॥ १ ॥

([3]नृत्यन्ती सपरितोषम् ।) जइ शिन्धुलाअवहदिअहे विअ [4]दिअहे दिअहे [5]शमलकम्म पडिवज्जइ अज्जुणे तदो [6]पज्जत्तभलिदकोट्ठागाले मंशशोणिएहि मे गेहे हुवीअदि । (परिक्रम्य दिशोऽवलोक्य ।) अह [7]कहिं क्खु गदे मे लुहिलप्पिए हुवीअदि । होदु । शद्दावइश्शं दाव । अले लुहिलप्पिआ लुहिलप्पिआ, इदो एहि । (क)

---

(क) हतमानुषमांसभारके कुम्भसहस्रवसाभिः सञ्चिते ।
अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ॥

यदि सिन्धुराजवधदिवस इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनस्ततः पर्याप्तभरितकोष्ठागारं मांसशोणितैर्मे गृहं भविष्यति । अथ क्व खलु गतो मे रुधिरप्रियो भविष्यति । भवतु । शब्दायिष्ये तावत् । अरे रुधिरप्रिय रुधिरप्रिय, इत एहि ।

---

**राक्षसीवाक्ये ।** हतमानुषमांसभारके कुम्भसहस्रवसाभिसञ्चिते । अनिशं च पिबामि शोणितं वर्षशतं समरो भविष्यति ॥ १ ॥ यदि च सिन्धुराजवध इव दिवसे दिवसे समरकर्मातिप्रवर्तयत्यर्जुनस्तदा पर्यन्तं भृतकोष्ठागारं मम मांसशोणितैर्गृहं भविष्यति । तत्कुत्र खलु गतो मे रुधिरप्रियो भविष्यति । भवतु । वादयिष्ये । अरे रुधिरप्रिय रुधिरप्रिय, एहि तावत् । अत्र भारके सञ्चिते सतीत्यन्वयः । अन्तं समाप्तिम् । कोष्ठागारं कोठाखण्डम् ॥ **राक्षसवाक्ये ।**

---

१. 'शोणिदेहिं', 'भोअणे'; 'भक्खणे'. २. 'कुम्भशहश्श वशाहि शञ्चिदम्'; 'इभशहश्शवशालशशञ्चिए' इति पाठौ. ३. '(इति नृत्यन्ती सपरितोषम् ।)'. ४. 'दिअहे दिअहे' इति क्वचिन्नास्ति. ५. 'शमलं'. ६. 'अपज्जत्त—'; 'अजत्त—'. ७. 'कहिं णु लुहिलप्पिए हुवीअदि । ता जाव इमश्शिं शमले पिअभत्तालं लुहिलप्पिअं अण्णेशामि । (परिक्रम्य ।) होदु शद्दावइश्शं दाव । लुहिलप्पिआ लुहिलप्पिआ, इदो एहि इदो एहि' इति बहुपुस्तकानां पाठः.

(ततः प्रविशति तथाविधो राक्षसः ।)

**राक्षसः**—([1]श्रमं नाटयन् ।)

पच्चग्गहदाणं मंशए जइ उण्हे लुहिले अ लब्भइ ।

ता एशे मह पलिश्शमे क्खणमेत्तं एव्व लहु णश्शइ ॥ २॥ (क)

(राक्षसी पुनर्व्याहरति ।)

**राक्षसः**—([2]आकर्ण्य ।) अले [3]के मं शद्दावेदि । (विलोक्य ।) [4]कहं पिआ मे वशागन्धा । (उपसृत्य ।) वशागन्धे, कीश मं शद्दावेशि ।

[5]लुहिलाशवपाणमत्तिए लणहिण्डन्तखलन्तगत्तिए ।

शद्दाअशि कीश मं पिए पुलिशशहश्शं हदं शुणीअदि ॥ ३ ॥ (ख)

**राक्षसी**—[6]अले लुहिलप्पिआ, एदं क्खु [7]मैए तुह कालणादो पच्चग्गहदश्श [8]कश्शवि लाएशिणो प्पहूदवशाशिणेहचिक्कणं कोण्हं [9]णवलुहिलं अग्गमंशं अ आणीदम् । ता पिवाहि णम् । (ग)

---

(क) प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरं च लभ्येत ।

तदेष मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥

(ख) अरे का मां शब्दायते । कथं प्रिया मे वसागन्धा । वसागन्धे, कस्मान्मां शब्दायसे ।

रुधिरासवपानमत्ते रणहिण्डनस्खलद्गात्रि ।

शब्दायसे कस्मान्मां प्रिये पुरुषसहस्रं हतं श्रूयते ॥

(ग) अरे रुधिरप्रिय, इदं खलु मया तव कारणात्प्रत्यग्रहतस्य कस्यापि राजर्षेः प्रभूतवसास्नेहचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पिबैतत् ।

---

अरे, को मां वादयते । कथं प्रिया मे वसागन्धा । यावदेनामुपसर्पामि । वसागन्धे, किंनिमित्तं त्वं मां वादयसे । रुधिरासवपानमत्ते रणभ्रमणस्खलद्गात्रि । वादयसे किमिति सुन्दरि मां पुरुषशतं हतमिति श्रूयते ॥ ३ ॥ राक्षसीवाक्ये । अरे रुधिरप्रिय रुधिरप्रिय, एतत्खलु मया तव कारणात्कस्यापि राजर्षे

---

१. '(भ्रमणं नाटयन् ।)'. २. '(श्रुत्वा ।)'. ३. 'के एशे मं'. ४. 'अले, कहं वशागन्धा' इति बहुपुस्तकानां पाठः. ५ 'लुहिलाशवपाणमत्तिए—' इत्यादि पाठः केषुचित्पुस्तकेषु न वर्तते. ६. 'अले' इति क्वचिन्नास्ति. ७. 'मए' इति क्वचिन्नास्ति ८. 'कश्शवि लाएशिणो शलीलावअवप्पहूद प्पहूदवशाशिणेहचिक्कण', 'कश्शवि लिउवग्गाहदश्श विलाशिणो प्पहूदवशाशिणेहमत्थिक्कचिक्कण' इति वा पाठः. ९. 'लुहिल'.

**राक्षसः**[1]—(सपरितोषम् ।) वशागन्धे, शुट्ठु । शोहणं तुए किदम् । बलिअह्मि पिवाशिए । ता उवणेहि । (क)

**राक्षसी**—[2]अले लुहिलप्पिआ, एदिशे [3]वि णाम हदणलगअतुलङ्गमशोणिअवशाशमुद्दुश्शंचले [4]शमले पडिब्भमन्ते तुमं पिवाशिएस्सि त्ति अच्चलिअं अच्चलिअम् । (ख)

**राक्षसः**[5]—अइ शुत्थिदे, णं पुत्तशोअशन्तत्तहिअअं शामिणीं हिडिम्बादेवीं [6]पेक्खिदुं गदह्मि । (ग)

---

(क) वसागन्धे, सुष्ठु । शोभन त्वया कृतम् । बलवदस्मि पिपासितः । तदुपनय ।

(ख) अरे रुधिरप्रिय, ईदृशेऽपि नाम हतनरगजतुरङ्गमशोणितवसासमुद्रदुःसचरे समरे परिभ्रमस्त्व पिपासितोऽसीत्याश्चर्यमाश्चर्यम् ।

(ग) अयि सुस्थिते, ननु पुत्रशोकसततहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितु गतोऽस्मि ।

---

प्रत्यग्रहतस्य प्रभूतवसाशोणित मस्तिष्कचिक्कणमग्रमांस चानीतम् । तत्खादय । पिब शोणितासवम् । अत्र प्रत्यग्र नवम् । प्रभूतमुपचितम् । मस्तिष्क गोदीति प्रसिद्धम् । अग्र प्रथमभागमुत्तम वा ॥ **राक्षसवाक्ये** । वसागन्धे, सुष्ठु । त्वया शोभन कृतम् । बलितोऽस्मि पिपासित' । तदुपनय । अत्र सुष्ठु मनोहरम् । बलितोऽतिशयत ॥ **राक्षसीवाक्ये** । अरे रुधिरप्रिय, ईदृशेऽपि नाम त्व हतगजनरतुरङ्गमवसासमुद्रदु सचरे समरे परिभ्रमन्पिपासितोऽसीत्याश्चर्यमाश्चर्यम् ॥ **राक्षसवाक्ये** । अयि सुस्थिते, ननु पुत्रशोकसतप्ता स्वामिनी हिडिम्बादेवीमन्वेष्टुं गतोऽस्मि । सुस्थिते हे । ननु भणामि ॥ **राक्षसीवाक्ये** । अरे रुधिर-

---

१ 'राक्षस.—(सपरितोषम् ।) शाहु वशागन्धे, शाहु । शोहण तुए किद । बलिअह्मि पिवाशिए ज कोशिण कोशिण लुहिल आणीदम्' इति बहुपुस्तकाना पाठः, केचित्तु 'राक्षस'—वसागन्धे, शुट्ठु तुए किदम् । राक्षसी—अले, गेण्ह एदं हत्थिकवालम् । पिवाहि शोणिआशवम् । राक्षस.— बलिअह्मि पिवाशिदो । ता उवणेहि' इत्येव पठन्ति. २. 'अले' इति क्वचिन्नास्ति. ३. 'वि णाम' इति क्वचिन्नास्ति. ४. 'शमलङ्गणे'. ५. 'राक्षस.—(सक्रोधम् ।) अले वशागन्धे, पुत्तघडुक्कअशोअशन्तत्तहिअअ'; 'राक्षस.—(सक्रोधम् ।) अइ शुत्थिदे, पुत्तघडुक्कअशोअशन्तत्तहिअअ' इति वा पाठः. ६. 'शमरशशद्दु'.

**राक्षसी**—लुहिलप्पिआ, अज्जवि शामिणीए हिडिम्बादेवीए घ-डुक्कअशोए ण उपशमइ। (क)

**राक्षसः**—[1]वशागन्धे, कुदो शे उवशमे। [2]केवलं अहिमण्णुशो-अशमाणदुक्खाए [3]शुभद्दादेवीए जण्णशेणीए अ कधं कधं वि शमा-श्शाशीअदि। (ख)

**राक्षसी**—लुहिलप्पिआ, [4]गेण्ह एदं हत्थिशिलक्कवालशंचिअं अग्गमंशोवदंशम्। पिवाहि [5]शोणिआशवम्। (ग)

**राक्षसः**—(तथा कृत्वा।) वशागन्धे, अह [6]किअप्पहूदं तुए शंचिअं लुहिलं अग्गमंशं अ। (घ)

---

(क) रुधिरप्रिय, अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति।

(ख) वसागन्धे, कुतोऽस्या उपशमः। केवलमभिमन्युशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथ कथमपि समाश्वास्यते।

(ग) रुधिरप्रिय, गृहाणैतद्धस्तिशिरःकपालसचितमग्रमांसोपदशम्। पिब शोणितासवम्।

(घ) वसागन्धे, अथ कियत्प्रभूतं त्वया सचित रुधिरमग्रमांस च।

---

प्रिय, तत्किमद्याप्यस्या स्वामिन्या हिडिम्बादेव्या पुत्रस्य घटोत्कचस्य शोको हृदयान्नोपशाम्यति॥ **राक्षसवाक्ये**। वसागन्धे, कुतोऽस्या उपशाम्यति। केवलमभिमन्युशोकसमानदु खया सुभद्रादेव्या याज्ञसेन्या च कथ कथमपि समा-श्वास्यते॥ **राक्षसीवाक्ये**। तद्गृहाणैतद्धस्तिशिर कपाटमग्रमास चानीतम्। तत्खादय। पिब शोणितासवम्॥ **राक्षसवाक्ये**। वसागन्धे, अथ कि प्रभूत त्वया रुधिर वसा मास च सचितम्। अत्र कि कियत्। प्रभूतमुपचितम्॥

---

१. 'अइ'. २ 'कि तु अहिमण्णुवहशोअशमाणदुक्खाए' इति पाठ. ३. 'शुभद्दादेवीए शम जण्णशेणीए कव वि शमाश्शाशीअदि', 'शुभद्दादेवीए जण्णशेणीए अ शमाश्शाशीअदि' इति वा पाठः. ४. 'गेण्ह तुम एद'. ५ 'णवशोणिआशवम्'. ६. 'किअ घडप्पहूदे'.

**राक्षसी**—अले लुहिलप्पिआ, पूव्वशंचिअं [1]तुमं वि जाणाशि जेव्व। [2]णवशंचिअं शिणु [3]दाव। भअदत्त[4]शोणिएहि कुम्भे शिन्धुलाअ[5]वशाहि कुम्भे दुवे [6]दुवदमच्छाहिवभू[7]लिश्शवशोमदत्तवल्हीअप्पमुहाणं [8]णलिन्दाणं अण्णाणं वि पाकिदपुलिशाणं लुहिलमंशेहि पुलिदाइं घडशदाइं अशंक्खाइं शन्ति मे गेहे। (क)

**राक्षसः**—(सपरितोषमालिङ्गय।) [9]शाहु शुग्घलिणीए, शाहु। इमिणा दे शुग्घलिणित्तणेण [10]अंज्ज उण शामिणीए हिडिम्बादेवीए [11]शंविहाणेण प्पणट्टं मे जम्मदालिद्दम्। (ख)

---

(क) अरे रुधिरप्रिय, पूर्वसचितं त्वमपि जानास्येव। नवसचित शृणु तावत्। भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कुम्भौ द्वौ द्रुपदमत्स्याधिपभूरिश्रवःसोमदत्तबाल्हीकप्रमुखाणां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरमासैः पूरितानि घटशतान्यसख्यानि सन्ति मे गेहे।

(ख) साधु सुगृहिणि, साधु। अनेन ते सुगृहिणीत्वेनाद्य पुनः स्वामिन्या हिडिम्बादेव्याः संविधानेन प्रनष्ट मे जन्मदारिद्यम्।

---

**राक्षसीवाक्ये**। अरे रुधिरप्रिय, पूर्वसचितं जानास्येव त्वम्। नवसञ्चितं शृणु तावत्। भगदत्तशोणितै कुम्भ सिन्धुराजवसाभि कण्डमन्येषां च द्रुपदसुतमत्स्याधिपभूरिश्रव सोमदत्तबाल्हीकप्रमुखानां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणा रुधिरमासैर्घटशतान्यसख्यातानि सन्ति मे गृहे। अत्र प्राकृत इतरजनः॥ **राक्षसवाक्ये**। साधु सुगृहिणि, साधु। एतेन तव सुगृहिणीत्वेनाद्य पुन स्वा-

---

१. 'तुम जेव्व जाणाशि' २ 'पच्चग्गशचिअ'. ३. 'दाव' इति क्वचिन्नास्ति. ४. 'शोणिअकुम्भे'; 'शोणिदेहि शदकुम्भे'. ५. 'वशाकुम्भे दुवे'; 'वशाहिं कुम्भशहश्शे'. ६. 'दुवद' इति क्वचिन्नास्ति. ७ 'भूलिश्शवअङ्गाहिवशोमदत्त–' इति पाठः. ८. 'णलिन्दाण पाकिदपुलिशाण अ लुहिलवशामशश्श घडा अविणद्धमुहा शहश्शशक्खा शन्ति मे गेहे', 'णलिन्दाण वडशद अण्णाणं वि पइदपुलिशाणं वशामंशशोणिदेहि पुलिदा घडआ अण्णाइ बहुआइं अशक्खाइ शन्ति मे गेहे' इति पाठौ ९. 'शाहु शाहु शुग्घलिणीए, शाहु शाहु' इति पाठ॰. १०. 'अज्ज उण' इति क्वचिन्नास्ति. ११. 'शविहाणेण अ प्पणट्टं मे दालिद्दम्' इति पाठ..

**राक्षसी**—लुहिलप्पिआ, केलिशे शामिणीए शंविहाणए किदे। (क)

**राक्षसः**—[1]वशागन्धे, आणत्ते क्खु हग्गे शामिणीए हिडिम्बादेवीए जह लुहिलप्पिआ, अज्जप्पहुदि तुए [2]अज्जउत्तभीमशेणश्श पिट्ठदोऽणुपिट्ठं शमले आहिण्डिदव्वं त्ति। ता तश्श अणुमग्गगामिणो हअमाणुशशोणिअणइदंशणप्पणट्ठबुभुक्खापिवाशश्श इह एव्व मे शग्गलोओ हुवीअदि। तुमं वि वीशद्धा भविअ लुहिलवशाहि कुम्भशहश्शं शंचेहि। (ख)

**राक्षसी**—लुहिलप्पिआ, किणिमित्तं कुमालभीमशेणश्श [3]पिट्ठदो आहिण्डीअदि। (ग)

---

(क) रुधिरप्रिय, कीदृश स्वामिन्या सविधानं कृतम्।

(ख) वसागन्धे, आज्ञतः खल्वहं स्वामिन्या हिडिम्बादेव्या यथा रुधिरप्रिय, अद्यप्रभृति त्वया आर्यपुत्रभीमसेनस्य पृष्ठतोऽनुपृष्ठ समर आहिण्डितव्यमिति। तत्तस्यानुमार्गगामिनो हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति। त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं संचिनु।

(ग) रुधिरप्रिय, किंनिमित्त कुमारभीमसेनस्य पृष्ठत आहिण्ड्यते।

---

मिन्या हिडिम्बादेव्या सविभागेन प्रणष्ट मे जन्मदारिद्र्यम्। अत्र सविभागो नियोग.। 'अज्जुणकेण' इति पाठे अद्यतनकेन। एतत्कालीनेनेत्यर्थ॥ **राक्षसीवाक्ये**। अरे रुधिरप्रिय, कीदृश स्वामिन्या हिडिम्बादेव्या सविभाग कृतः॥ **राक्षसवाक्ये**। वसागन्धे, आज्ञप्तोऽस्मि स्वामिन्या हिडिम्बादेव्या। पुत्र रुधिरप्रिय, अद्यप्रभृति त्वया नाथभीमसेनस्य पश्चात्समर आहिण्डितव्यमिति॥ **राक्षसीवाक्ये**। अरे रुधिरप्रिय, किंनिमित्त त्वया नाथभीमसेनस्य पश्चात्समर आहिण्डितव्यम्॥ **राक्षसवाक्ये**। वसागन्धे, तेन खलु स्वामिना वृको-

---

१. 'अज्ज अह शामिणीए हिडिम्बादेवीए शबहुमाण शद्दाविअ आणत्ते। जह लुहिलप्पिआ, अज्जप्पहुदि अज्जउत्तभीमशेणश्श' इति बहुपुस्तकाना पाठः. २. 'अज्जउत्तश्श भीमशेणश्श'. ३. 'पिट्ठदोऽणुपिट्ठ'.

**राक्षसः**—वशागन्धे, तेण हि शामिणा [1]विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादम् । तं च अम्हेहि लक्खशेहि अणुप्पविशिअ पादव्वम्[2] । (क)

**राक्षसी**—(सहर्षम् ।) शाहु शामिणीए, शाहु । शुशंविहाणे मे भत्ता[3] किदे । (ख)

(नेपथ्ये महान्कलकलः[4] ।)

**राक्षसी**—(आकर्ण्य । ससंभ्रमम्[5] ।) अले लुहिलप्पिआ, किं णु क्खु एशे महन्ते कलअले शुणीअदि[6] । (ग)

**राक्षसः**—(दृष्ट्वा ।) वशागन्धे[7], एशे क्खु धिट्टज्जुण्णेण दोणे केशेशु आकट्टिअ अशिवत्तेण वावादीअदि । (घ)

---

(क) वसागन्धे, तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम् । तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम् ।

(ख) साधु स्वामिनि, साधु । सुसविधानो मे भर्ता कृतः ।

(ग) अरे रुधिरप्रिय, किं नु खल्वेष महान्कलकलः श्रूयते ।

(घ) वसागन्धे, एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्यासिपत्रेण व्यापाद्यते ।

---

दरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम् । तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम् । ततस्तस्य मार्गानुगामिनो हतमानुषशोणितनदीदर्शनेन प्रणष्टा मे बुभुक्षा पिपासा च । त्वमपि विश्वस्ता भूत्वा रुधिरं वसा मांसं च सचेष्यसीतीहैव सुरलोको भविष्यतीति । अत्र बुभुक्षा भोक्तुमिच्छा । विश्वस्ता विश्वासवती ॥ **राक्षसीवाक्ये** । साधु स्वामिनि, साधु । सुसविभागो मम भर्ता कृत ॥ **राक्षसीवाक्ये** । अरे रुधिरप्रिय रुधिरप्रिय, उत्तिष्ठोत्तिष्ठ । कुत खल्वेष महान्कलकलः श्रूयते ॥ **राक्षसवाक्ये** । वसागन्धे, एष खलु द्रोणो धृष्टद्युम्नेन केशेष्वाकृष्य

---

१. 'विओदलेण वच्छत्थलदो दुश्शाशणश्श' इति क्वचित्पाठः. २. 'पादव्व त्ति'. ३. 'भत्ता तुए किदे' इति बहुपुस्तकानां पाठः. ४ एतदनन्तरं '(उभावाकर्णयतः ।)' इत्यधिकः पाठो बहुपुस्तकेषु दृश्यते. ५. 'सभयम्'. ६. 'समुट्ठीअदि'. ७. 'हला वशागन्धे'.

**राक्षसी**—(सहर्षम् ।) लुहिलप्पिआ, एहि । गच्छिअ दोणश्श लुहिलं पिवम्हे । (क)

**राक्षसः**—(सभयम् ।) वशागन्धे, बह्मणशोणिअं क्खु एदं गलअं दहन्ते दहन्ते पविशादि । ता किं एदिणा । (ख)

(नेपथ्ये पुनः कलकलः ।)

**राक्षसी**—लुहिलप्पिआ, पुणोवि एशे महन्ते कलअले शुणीअदि । (ग)

**राक्षसः**—(नेपथ्याभिमुखमवलोक्य ।) वशागन्धे, एशे क्खु अश्शत्थामे आकड्ढिदाशिवत्ते इदो एव्व आअच्छदि । कदावि दुवदशुदलोशेण अम्हेवि वावादइश्शइ । ता एहि । अतिक्कमह्म । (घ)

(इति निष्क्रान्तौ ।)

**प्रवेशकः ।**

(क) रुधिरप्रिय, एहि । गत्वा द्रोणस्य रुधिरं पिबावः ।

(ख) वसागन्धे, ब्राह्मणशोणितं खल्वेतद्गलं दहद्दहत्प्रविशति । तत्किमेतेन ।

(ग) रुधिरप्रिय, पुनरप्येष महान्कलकलः श्रूयते ।

(घ) वसागन्धे, एष खल्वश्वत्थामाकृष्टासिपत्र इत एवागच्छति । कदाचिद्द्रुपदसुतरोषेणावामपि व्यापादयिष्यति । तदेहि । अतिक्रमावः ।

---

व्यापाद्यते ॥ **राक्षसीवाक्ये** । तदेहि । द्रोणस्य रुधिरं पातुं गच्छावः ॥ **राक्षसवाक्ये** । ब्राह्मणरुधिरं खल्वेतत् । गलं दहद्दहत्प्रविशति । तदलं ममैतेन ॥ **राक्षसीवाक्ये** । अरे रुधिरप्रिय रुधिरप्रिय, उत्तिष्ठोत्तिष्ठ । पुनरप्येष महान्कलकलः श्रूयते ॥ **राक्षसवाक्ये** । वसागन्धे, एष खल्वश्वत्थामाकृष्टासिपत्र इतः समरभूमिमवतरति । कदाचिद्द्रुपदसुतरोषेणास्मान्राक्षसान्प्रेक्ष्य व्यापादयिष्यति । तदेहि । पलायावहे । अत्रासिपत्रः खड्गः । द्रुपदसुतो धृष्टद्युम्नः ॥ **राक्षसीवाक्ये** । एवं करवाव ॥ **प्रवेशक इति** । 'हीनाभ्यामेव पात्राभ्यामङ्कादौ यत्प्रवर्तते । प्रवेशकः स विज्ञेयः सौरसेन्यादिभाषया ॥' इति भरतः ॥

---

१. 'लुहिलप्पिआ लुहिलप्पिआ, अह्मे वि गच्छिअ दोणश्श लुहिलं पिबह्म' इति बहुपुस्तकानां पाठः. २ एतदनन्तरं '(उभौ तथा कुरुतः ।) राक्षसः—(किंचित्पीत्वा ।) वशागन्धे, बह्मणशोणिअं क्खु एदं' इति क्वचित्पाठो दृश्यते ३. 'दहन्ते पविशादि'. ४ 'ता एहि शामिणीए हिडिम्बादेवीए आणत्ति कलेह्म' इति बहुपुस्तकानां पाठः.

(ततः प्रविशत्या[1]कृष्टखड्गः कलकलमाकर्णयन्नश्वत्थामा ।)

**अश्वत्थामा**—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रति[2]रवानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरय[3]मभूतपूर्वः पुरः ॥ ४ ॥

(विचिन्त्य ।) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनद[4]र्पा-दतिक्रान्तमर्यादेन [5]परिकोपितस्तातः । [6]यतः समुल्लङ्घ्य शिष्यप्रियता-[7]मात्मप्रभावसदृशमाचेष्टते । तथाहि ।

यद्दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे
रामाल्लब्धसमस्तहेतिगुरुणो [8]वीर्यस्य यत्सांप्रतम् ।
लोके सर्वधनुष्मताम[9]धिपतेर्यच्चानुरूपं [10]रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥ ५ ॥

([11]पृष्ठतो विलोक्य ।) तत्कोऽत्र । रथमुपनयतु । अथवालमिदानीं मम रथप्रतीक्षया । सशस्त्र [12]एवास्मि सजलजलधरप्रभाभा[13]सुरेण [14]सुप्रग्रह-

**महाप्रलयेति** । पुष्करावर्तको मेघविशेष । घन निबिडम् । अनुकारी सदृश । श्रवणभैरव कर्णकटु । स्थगित पिहितम् । द्यावापृथिव्योरन्तर रोद । तदेव कन्दर तस्य वा कन्दर मध्यम् । 'रोदश्च रोदसी चैव दिवि भूमौ पृथक्पृथक्' इत्यमर । अभूतपूर्व न पूर्व भूत इत्यर्थ । सुप्सुपेति समास ॥ ४ ॥ **यद्दुर्योधनेति** । आचेष्टते करोति । यदिति सर्वत्र यच्छब्देनाग्रे वक्ष्यमाण कर्माभिधीयते । पक्षपातो गौरवम् । रामात्परशुरामात् । हेतिरस्त्रम् । गुरुणोऽधिकस्य । सांप्रत युक्तम् । धनुष्मतां प्रशस्तधनुर्धराणाम् । अधिपतेस्तस्य रोषस्य यदनुरूपमित्यन्वय । घस्मरो भक्षक । 'भक्षको घस्मरोऽद्मर' इत्यमर ॥ ५ ॥ भासुरेण दीप्तेन । 'भञ्जभासमिदोघुरच्' इति घुरच्प्रत्यय । सुप्रग्रह सुष्ठु ग्रहण

१. 'उत्खातखड्ग.'. २ 'रुतानुकारी'. ३. 'अभूतपूर्वप्लव', 'अभूतपूर्व प्लव', 'अभूतपूर्व. श्रुत.'. ४. 'दर्पातिक्रान्त–': ५ 'कोपित.'. ६. 'यतः' इति क्वचिन्नास्ति ७. 'आत्मसदृशभावम्'. ८. 'वैर्यस्य'. ९ 'अभिमतम्'. १० 'क्रुध'. ११ '(पृष्ठतो विलोक्य ।) तदलमिदानी मम रथप्रतीक्षयानया' इति पाठ.. १२. 'चास्मि'; 'चाहम्'. १३. 'भास्वरेण'. १४. 'सुप्रभविमलकलधौतसंपादितत्सरुणा खड्गेन' इति पाठ

विमलकलधौतत्सरुणामुना खड्गेन। [1]यावत्समरभुवमवतरामि। (परिक्रम्य। वामाक्षिस्पन्दन सूचयित्वा।) [2]अये, ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि समरगमनविघ्नमुत्पादयन्ति। भवतु। [3]गच्छामि। (सावष्टम्भ परिक्रम्याग्रतो विलोक्य।) कथम[4]वधीरितक्षात्रधर्मणा[5]मुज्झितसत्पुरुषोचितलज्जावगुण्ठनानां विस्मृतस्वामिसत्कारलघुचेतसां [6]द्विरदतुरङ्गमचरणचारिणामगणितकुल[7]वंश-सदृशपराक्रमव्रतानां [8]रणभूमेः समन्तादपक्रामतामयं महान्नादो बलानाम्। ([9]निरूप्य।) [10]हाँ हा धिक्कष्टम्। कथमेते महारथाः कर्णादयोऽपि [11]समरात्पराङ्मुखा भवन्ति। [12]कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत्। भवतु [13]संस्तम्भयामि। भो भो कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः, कृतं कृतम[14]मुना समरपरित्यागसाहसेन।

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।

---

रश्मिर्वा। 'हयादिरश्मौ रश्मौ च प्रग्रह सग्रहेऽपि च' इति विश्व। कलधौत सुवर्णम्। 'त्सरु खड्गादिमुष्टौ स्यात्' इत्यमर। नाम सभावनायाम्। अनिमित्तानीति कर्तृपदम्। उज्झित त्यक्त लज्जैवावगुण्ठनमुपरिवस्त्र यैस्तेषाम्। चारीति ताच्छीलिको णिनि.। अपक्रामता पलायमानानाम्। 'अपक्रमोऽपयानं स्यात्' इत्यमर। 'हा हा शोकेऽपि निन्दायाम्' इति। 'वेला तत्तीरनीरयो' इत्यमर.। महीधरो गिरि। कृत निष्फलम्। 'कृत क्लीव तु निष्फले' इति विश्व'॥ **यदीति**। अपास्य त्यक्त्वा। मृत्योर्मरणाद्यमाद्वा। इत समरात्।

---

१ 'तावत्'. २ 'आ' कथम्', 'कथम्' ३ 'अवगच्छामि'. ४ 'अवधीरितमकलक्षात्र–'. ५ 'उत्सृष्ट–'. ६ 'त्यक्तद्विरद–' ७. 'वय'. ८. 'रणभूमे समन्तादपक्रामतामस्मत्सेनाभटानामयं महान्निनाद.', 'रणभूमे पराक्रामतामय महान्नादो बलानाम्' इति वा पाठ.. ९ 'पुनरवलोक्य', 'अन्यतोऽवलोक्य'. १० 'अहह धिक्कष्टम्', 'हा धिक्कष्टम्'. ११. 'सङ्ग्रामात्पराङ्मुखी भवन्ति. १२. 'कथ नु' इत्यस्मात्पूर्वं '(साशङ्कम्।)' इत्यधिक क्वचित्. १३. 'संस्तम्भयामि' इत्यत्र 'एव तावत्' इति बहुपुस्तकेषु पाठ. १४. 'अमुना' इति क्वचिन्नास्ति.

अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे[1] ॥ ६ ॥

अपि च ।

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं[2] को भयस्यावकाशः ॥ ७ ॥

(नेपथ्ये ।)

कुतोऽद्यापि ते तातः ।

**अश्वत्थामा**—(श्रुत्वा ।) किं ब्रूथ—'कुतोऽद्यापि ते तातः' इति । (सरोषम् ।)[3] आः क्षुद्राः भीरवः[4], कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया[5] जिह्वया ।

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ८ ॥

---

अन्यतोऽन्यत्र । अथ पक्षान्तरे । मुधा विफलम् ॥ ६ ॥ **अस्त्रेति** । अस्त्रमेव ज्वाला तेनावलीढ आक्रान्त प्रतिबलजलधिस्तस्य मध्य और्वायमाणे वडवानल इवाचरति सति । संभ्रमेण भयेन । हार्दिक्यो योधविशेषः । शङ्कां मुञ्च ॥ ७ ॥ इह श्लोके युक्तिरलंकारः । 'अर्थावधारणं यत्तु प्रमाणाद्युक्तिरुच्यते' इति भरतः । अन्यदीयप्रौढ्यतिशयरूपा गर्भसंधिरियम् । यदाह—'स्वीयान्यदीयभेदेन प्रौढिवाक्यमुदाहृति' ॥ वो युष्माकम् ॥ **दग्धुमिति** । दहनकैररश्मिकिरणैः । न वाता न गतिमन्तः । वाता इति । वा गतिगन्धनयोः क्तः । सप्तधा सप्तप्रकारेण भिन्नाः सप्त । तथा चोनपञ्चाशत् । पापं मरणरूपम् । हे पापाः पा-

---

१. 'कुरुध्वम्'; 'क्रियेत' २. 'रणधुराम्' ३. '(सरोषम् ।)' इति क्वचिन्नास्ति. ४. 'समरभीरवः'. ५. 'विदीर्णम्'.

(प्रविश्य सम्भ्रान्तः [1]सम्प्रहार)

**सूतः**—परित्रायतां परित्रायतां कुमारः। (इति [2]पादयोः पतति ।)

**अश्वत्थामा**—(विलोक्य ।) अये, [3]कथं [4]तातस्य सारथिरश्वसेनः। [5]आर्य, ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि । किं [6]मत्तः परित्राणमिच्छसि ।

**सूतः**—([7]सकरुणम् ।) [8]कुतोऽद्यापि ते तातः ।

**अश्वत्थामा**—(सावेगम् ।) किं [9]तातो नामास्तमुपगतः ।

**सूतः**—अथ किम् ।

**अश्वत्थामा**—[10]हा तात, (इति मोहमुपगतः ।)

**सूतः**—कुमार, समाश्वसिहि समाश्वसिहि ।

**अश्वत्थामा**—([11]लब्धसंज्ञः सास्रम् ।) हा तात, हा सुतवत्सल, हा लोकत्रयैकधनुर्धर, हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्, [12]क्वासि । प्रयच्छ मे प्रतिवचनम् ।

**सूतः**—[13]कुमार, अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव ।

**अश्वत्थामा**—(अश्रूणि [14]विमुच्य ।) आर्य, कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः ।

---

पिष्टा. ॥ ८ ॥ प्रतिग्रहो ग्रहणम् ॥ **किं शिष्यादिति** । शिष्याद्भीमात् । गुरुगदामेव गुरुदक्षिणाम् । भीमः प्रियो मित्रं यस्य स तातः । अन्तेवासी शिष्यः ।

---

१. 'सम्प्रहार.' इति क्वचिन्नास्ति. २. 'पादयो. पतति' इत्यत्र 'आत्मानं पातयति' इति क्वचित्पाठ. ३ 'कथं' इति क्वचिन्नास्ति. ४. 'तातसारथि.'. ५. 'आर्य आर्य, ननु त्रैलोक्यत्राणक्षमस्य', 'आर्य, त्रैलोक्यत्राणक्षमस्य तातस्य' इति वा पाठ. ६. 'मत्तः शिशुजनात्' ७. '(उत्थाय । सकरुणम् ।)'; '(सास्रम् ।)'. ८. 'कुमार, कुतोऽद्यापि' इति क्वचित्पाठ. ९. 'तात एव नास्ति' इति क्वचित्पाठः. १०. 'हा तात, हा तात, (इति मोहमुपगम्य पतित ।)' इति पाठ. ११. '(लब्धसंज्ञ उत्थाय । सास्रम् ।)'. १२. 'क्वासि । प्रयच्छ मे प्रतिवचनम्' इति क्वचिन्नास्ति. १३. 'कुमार' इति क्वचिन्नास्ति, क्वचित्तु 'कुमार' इत्यत्र 'आयुष्मन्' इति पाठो वर्तते. १४. 'प्रमृज्य'.

कि शिष्याद्गुरुदक्षिणां गुरुगदां भीमप्रियः प्राप्तवान्

**सूतः**—शान्तं पापम् ।

**अश्वत्थामा**—

अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ।

**सूतः**—कथमेवं भविष्यति ।

**अश्वत्थामा**—

गोविन्देन सुदर्शनस्य निशितं धारापथं प्रापितः

**सूतः**—एतदपि नास्ति ।

**अश्वत्थामा**—

शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥ ९ ॥

**सूतः**—कुमार,

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणातिघोरम् ॥ १० ॥

**अश्वत्थामा**—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा ।

**सूतः**—ननु कुमार एव कारणम् ।

**अश्वत्थामा**—कथमहमेव नाम ।

---

तद्विषये दयालुर्दयायुक्तः । जिष्णुनार्जुनेन । सुदर्शनो हरिचक्रम् । 'चक्र सुदर्शनः' इत्यमरः । अन्यतोऽन्यस्मात् । खलु निश्चये ॥ ९ ॥ **एतेऽपीति** । एते भीमार्जुनकृष्णाः । संख्ये सङ्ग्रामे । धूर्जटेर्हरस्य । हृदयेनेत्याचार्यविशेषणम् । अस्याचार्यस्य । अतिघोरं विनाशः ॥ १० ॥ अस्त्रं काण्डादि । शस्त्रं खड्गादि । इत्यनयोर्विशेषः । 'असु क्षेपणे' । 'शसु हिंसायाम्' । औणादिकस्त्रण्प्रत्ययः ॥

---

१. 'भीमात्'. २. 'गुरुगदात्'. ३ 'शान्तं पापं शान्तं पापम्' इति क्वचित्पाठः. ४ 'उज्झितदयेन'. ५. 'नियतं'. ६. 'तदैव विहितं'. ७. 'नाम' इति क्वचिन्नास्ति.

**सूतः**—श्रूयताम् । (अश्रूणि विमुच्य ।)

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं [1]शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं [2]चापि तुल्यं मुमोच ॥ ११ ॥

**अश्वत्थामा**—हा तात, हा सुतवत्सल, हा वृथामदर्थपरित्यक्तजीवित, हा शौर्यराशे, हा शिष्यप्रिय, हा युधिष्ठिरपक्षपातिन्, (इति रोदिति ।)

**सूतः**—कुमार, अलमत्यन्तपरिदेवनकार्पण्येन ।

**अश्वत्थामा**—

श्रुत्वा वधं मम मृषा [3]सुतवत्सलेन
तात त्वया सह शरैरसवो विमुक्ताः ।
जीवाम्यहं [4]पुनरहो भवता विनापि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥ १२ ॥

([5]इति मोहमुपगतः ।)

**सूतः**—समाश्वसितु समाश्वसितु कुमारः ।

(ततः प्रविशति [6]कृप ।)

**कृपः**—([7]सोद्वेग नि श्वस्य ।)

---

**अश्वत्थामेति** । पृथासूनुना युधिष्ठिरेण । स्वैरमल्पम् । शेषे । वचनस्येति शेष । किल निश्चये । व्याहृतमुक्तम् । असावाचार्य ।दयित प्रियस्तनय पुत्रो यस्य स तथा । प्रत्ययात्प्रतीते । आजौ सङ्ग्रामे । शस्त्राणि मुमोचापि तुल्य धनु समकाल नयनसलिलं च मुमोचेत्यन्वय ॥ ११ ॥ इहाभूताहरणरूपा गर्भसधि । यदाह—'उक्त युक्त तु यद्वाक्यमभूताहरण तु तत्' इति। अश्वत्थामा गजनाम॥ **श्रुत्वेति** । असव प्राणा ॥ १२ ॥ **ततः प्रविशति कृप इति** । अत्र सूचनाव्यतिरेकेणैव प्रवेश इति प्रवेशे सूचना व्यभिचरतीत्यवधेयम् ॥

---

१. 'शेते' २. 'चेति'. ३. 'सुतवल्लभेन' ४. 'पुनरय भवता वियुक्त.' इति पाठ ५. '(इति मूर्च्छति ।)'; '(इति मूर्च्छितः पतति ।)'. ६ 'सोद्वेगः कृप.'. ७. '(सोद्वेग निःश्वस्य ।)' इति क्वचिन्नास्ति

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥ १३ ॥

तत्कथं नु खलु वत्सम[१]द्य द्रक्ष्याम्यश्वत्थामानम् । अथ वा हिमवत्सारगुरुश्चेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के । किं तु [२]पितुः परिभवमसदृशमुपश्रुत्य न जाने किं व्यवस्यतीति । अथ वा

[३]एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥ १४ ॥

([४]विलोक्य ।) तदयं वत्सस्तिष्ठति । यावदुपसर्पामि । (उपसृत्य । ससंभ्रमम् ।) [५]वत्स, समाश्वसिहि समाश्वसिहि ।

**अश्वत्थामा**—([६]संज्ञां लब्ध्वा । सास्रम् ।) हा तात, हा सकलभुवनैकगुरो, (आकाशे ।) युधिष्ठिर, युधिष्ठिर,

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम् ॥ १५ ॥

---

**धिक्सानुजमिति** । सानुजमिति धिग्योगे द्वितीया । अजातशत्रुं युधिष्ठिरम् । खलु प्रसिद्धौ निश्चये वा । द्रौपद्याः केशग्रहस्तदाद्य द्रोणस्य च यैर्वीक्षित इत्यन्वयः ॥ १३ ॥ हिमवत्सारं हिमालयवलम् । स्थितिः स्थैर्यम् । तस्मिन्नश्वत्थामनि । व्यवस्यति करोति । **एकस्येति** । एकस्य केशग्रहस्य । तावच्छब्द उपक्रमे । निःशेषिता विनष्टाः ॥ १४ ॥ इहाक्षिप्तरूपा गर्भसंधिः । यदाह—'बीजस्योच्छेदनं यत्तु तदाक्षिप्तमुदीरितम्' ॥ **आजन्मन इति** । आजन्मनो जननादारभ्य । वितथमसत्यम् । किल प्रसिद्धौ । यत्त्वं जनं न द्वेक्षि द्वेषवन्तं करोषि ॥ १५ ॥

---

१. 'अद्य' इति पुस्तकान्तरे नास्ति २. 'असदृशं पितुः पराभवमुपश्रुत्य' इति पाठः. ३. 'एकस्यैव विपाकोऽयं' इति पाठः ४ '(विभाव्य ।)'. ५. 'वत्स, समाश्वसिहि'. ६. '(लब्धसंज्ञः. सास्रम् ।)' इति पाठः.

**सूतः**—[१]कुमार, एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

**अश्वत्थामा**—(पार्श्वे विलोक्य । सबाष्पम् ।) मातुल,

गतो [२]येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परीहासाश्चित्राः सततमभवन्येन भवतः
स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल गतः ॥ १६ ॥

**कृपः**—[३]परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन ।

**अश्वत्थामा**—मातुल, परित्यक्तमेव मया [४]परिदेवितम् । एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

**कृपः**—वत्स, [५]अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम् ।

**सूतः**—[६]कुमार, अलमतिसाहसेन ।

**अश्वत्थामा**—[७]आर्य शारद्वत,

मद्वियोगभयात्तातः परलोकमितो गतः ।
[८]करोम्यविरहं तस्य वत्सलस्य सदा पितुः ॥ १७ ॥

**कृपः**—वत्स, यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीया इति । पश्य ।

---

शारद्वत. कृप ॥ **गत इति** । कण्डूनिकषण· कण्डूनिवारण । हे मातुल ते स्वसुर्भगिन्या भर्ता । खलु प्रश्ने । क्व कुत्र ॥ १६ ॥ परिगत ज्ञात परिगन्तव्य ज्ञापनीय येन स तथा । परिदेवितं विलाप ॥ **मदिति** । अविरह समाजम् ॥ १७ ॥ लोकद्वये इहलोके परलोके च ॥ **निवापेति** । 'निवाप. पितृदान स्यात्' इत्यमरः ।

---

१. 'आयुष्मन्ननु'. २. 'येनासि' ३ 'परिगत. परिगन्तव्यमेवात्रभवान्' इति पाठ·. ४. 'परिदेवनम्'. ५. 'अनुपपन्नमिद भवद्विधानाम्'; 'अनुपपन्नमीदृशं भवद्विधानाम्'; 'अनुपपन्न भवद्विधानामिदम्' इति पाठान्तराणि. ६. 'वत्स'. ७. 'आर्य, किमुच्यते' इति बहुपुस्तकानां पाठः. ८. 'करोमि विरह तस्य वत्सलस्य कथं पितुः' इति पाठ..

निवापाञ्जलिदानेन [1]केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा ॥ १८ ॥

सूतः—आयुष्मन्, [2]यथैव मातुलस्ते शारद्वतः कथयति तत्तथा ।

अश्वत्थामा—आर्य, सत्यमेवेदम् । किं त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान्धारयितुम् । तद्गच्छामि तमेवोद्देशं यत्र [3]तथाविधमपि पितरं द्रक्ष्यामि । (उत्तिष्ठन्खड्गमालोक्य । विचिन्त्य ।) [4]कृतमद्यापि शस्त्रग्रहणविडम्बनया[5] । भगवन् शस्त्र,

गृहीतं येनासीः परिभवभयान्नोचितमपि[6]
प्रभावाद्यस्या[7]भून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ १९ ॥

([8]इत्युत्सृजति ।)

(नेपथ्ये ।)

भो भो राजानः, कथमिह [9]भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते ।

---

निवापाञ्जलिर्जलाञ्जलि । केतनैर्गृहै । अतोऽन्यथा जीवन्वा किम् । अपि तु जीवतो जलादिदानमेव क्रियत इति भाव. ॥ १८ ॥ तथाविध मृतम् ॥ **गृहीतमिति** । येनाचार्येण । यस्याचार्यस्य । तव विषय. कश्चिन्नाभूदेव न खलु । सर्व एव विषयोऽभूदित्यर्थ । विमोक्ष्ये त्यक्ष्यामि। अतो भवते स्वस्त्यस्तु । स्वस्तियोगे 'नम स्वस्ति–' इत्यादिना चतुर्थी ॥ १९ ॥ उत्सृजति त्यजति । भारद्वाजस्य द्रोणस्य । नृशसेन पापवता । 'नृशसो घातुकः क्रूरः पापः' इत्यमर ॥

---

१. 'वितानैः' २. 'यदाह शारद्वतः ।'; 'यथाह शारद्वत ।'; 'यथा ते मातुलः कथयति तथैवैतत् ।' इति नानाविध. पाठ.. ३. 'तादृशमपि'. ४. 'अलमद्यापि शस्त्रग्रहणविधया' इति पाठ.. ५. एतदनन्तर '(सास्रमञ्जलिं बद्ध्वा ।)' इति क्वचिदधिक. पाठः. ६. 'नोचितमिति' ७. 'आसीत्'. ८. '(इति परित्यक्तुमिच्छति ।)'. ९. 'भवन्त. सर्वे गुरोः परिभवममुना नृशसेन प्रयुक्तमत्रभवतो भारद्वाजस्योपेक्षन्ते'; 'भवन्तस्तत्रभवतः क्षत्रियगुरोर्भारद्वाजस्यासदृशं परिभवममुना नृशसेन प्रयुक्तमुपेक्षन्ते' इति पाठौ.

**अश्वत्थामा**—(आकर्ण्य। शनैः शनैः शस्त्रं स्पृशन्।) किं गुरोर्भारद्वाजस्य परिभवः।

(पुनर्नेपथ्ये।)

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोका-
द्द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ २० ॥

(सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा।) किं नामेदम्।

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं व्रतमास्थितस्य।
तातस्य मे पलितमौलिनिरस्तकाशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ २१ ॥

**कृपः**—वत्स, एवं किल जनः कथयति।

**अश्वत्थामा**—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः।

**सूतः**—(सभयम्।) कुमार, आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः।

**अश्वत्थामा**—हा तात, हा पुत्रप्रिय, मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः। अथ वा

**आचार्यस्येति**। न्यस्तं त्यक्तम्। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। नृशंसं विनाशम्। 'विनाशेऽपि नृशंसं स्यात्' इति हारावली ॥ २० ॥ **प्रत्यक्षमिति**। आत्तं गृहीतम्। नृपाणां प्रत्यक्षं समक्षम्। प्रायोपवेशः उपवासार्थमुपवेशनम्। तत्सदृशं च यथा स्यादेवम्। तत्रापि निष्क्रियेणोपविश्यते। इहापि तथेति भावः। पलितो जराशुक्लो यो मौलिर्धम्मिल्लस्तेन निरस्तो जितः काशः काशकुसुमं येन तत्र। 'मौलिः किरीटे धम्मिल्ले' इति विश्वः ॥ २१ ॥

१. '(आकर्ण्य। सक्रोधं शनैः खड्गं स्पृशन्।)' इति क्वचित्पाठः. २. 'किं किं'; 'किं नु'. ३. 'क्षालितार्धाननस्य'. ४. 'शममास्थितस्य'. ५. 'निमीलिताक्षे'. ६. 'मन्दभाग्यस्य'. ७. '(विचिन्त्य।) अथ वा' इति क्वचित्पाठः.

परित्यक्ते देहे रणशिरसि [1]शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
[2]असंख्याताख्त्रौघद्रविणमदमत्तस्य च रिपो-
[3]र्ममैवायं पादः शिरसि निहितस्[4]तस्य न करः ॥ २२ ॥

आः दुरात्मन्पाञ्चालापसद,

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां [5]खलु विदधतः पाणिमस्योत्तमाङ्गे ।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ २३ ॥

युधिष्ठिर, युधिष्ठिर, अजातशत्रो, अमिथ्यावादिन्, धर्मपुत्र, सानुजस्य ते किमनेनापकृतम् । अथ वा किमनेनालीकप्रकृतिजिह्मचेतसा । [6]अर्जुन, सात्यके, बाहुशालिन्वृकोदर, माधव, युक्तं नाम [7]भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम् । अथ वा सर्व एवैते पातकिनः । किमेतैः ।

---

**परित्यक्त इति** । मनसा त्वयेति शेषः । श्वा कुक्कुरः । अस्त्रौघ एव द्रविणं धनं तेन मदो गर्वस्तदेव मद्यं वा तस्य । पितुः शिरसि करो न निहितः । किं तु ममैव शिरसि पादो निहित इत्यन्वयः ॥ २२ ॥ **तातमिति** । उपलभ्य ज्ञात्वा । शङ्का शत्रुकृतमारणादिशङ्काम् । खलु प्रसिद्धौ । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । अश्वत्थामा तव स्मृतिं किं न यातः ॥ २३ ॥ अजातशत्रुणा किमपि तु न किमपि । कीदृशेन । अलीकेनासत्येन । इतरजनवत्कुटिलं चेतो यस्य तेन ॥

---

१. 'शोकान्धमनसः'; 'शोकार्तमनसा' २ 'स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपोः'; 'असख्याताख्त्रौघद्रविणमदलेशस्य रिपुणा' इति वा पाठः. ३. 'मयैव'. ४. 'तस्य सहसा'. ५. 'जड, विदधतः'. ६. 'अर्जुन, अर्जुन, सात्यके, सात्यके' इति क्वचित्पाठः. ७. 'भवता सुरासुरमनुजगुरोर्लोकत्रयैकधनुर्धरस्य' इति क्वचित्पाठः.

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

**कृपः**—वत्स, [2]किं न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

**अश्वत्थामा**—भो भोः पाण्डवमत्स्यसोमक[3]मागधेया क्षत्रियापसदाः,

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥ २५ ॥

[4]सूत, गच्छ त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं [5]महाहवलक्षणं नामास्मत्स्यन्दन[6]मुपनय ।

**सूतः**—[7]यदाज्ञापयति कुमारः । (इति निष्क्रान्तः ।)

**कृपः**—वत्स, अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे [8]निकाराग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम् । [9]किं तु—

**अश्वत्थामा**—किमतः परम् ।

---

**कृतमिति** । नरकरिपुः कृष्णः । असृग्रक्तम् । मेदो मज्जा । बलिमुपहारम् । 'बलिः पूजोपहारयोः' इति शाश्वतः ॥ २४ ॥ ग्रामः सङ्घः । कोविदः पण्डितः ॥ **पितुरिति** । पितुर्मूर्ध्नि द्रुपदेन स्पृष्टे सति यद्रामेण परशुरामेण कृतं क्षत्रियजनघातादिकं तद्भवतां किं श्रुतिपथं न गतम् । अश्वत्थामा किमद्यापि तत्कर्म विधातुं न प्रभवति । अपि तु प्रभवत्येव । विघसो भोजनविशेषः । 'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः ॥ २५ ॥ निकारस्य परिभवस्य । 'निकारः स्यात्परिभवः'

---

१ 'पतिभिः'. २. 'न किंचिन्न संभाव्यते' ३. 'मागधाद्याः क्षत्रियाः'. ४. 'सूत' इत्यस्मात्पूर्वं '(सूतमुद्दिश्य ।)' इति क्वचिदधिकः पाठः. ५. 'आहितलक्षण'. ६ 'उपाहर'. ७. 'यथाज्ञापयति'. ८. 'परिभवाग्नौ'. ९. 'किं तु' इति क्वचिन्नास्ति.

**कृपः**—सैनापत्ये[1]ऽभिषिच्य भवन्तमिच्छामि समरभुवमवतारयितुम् ।

**अश्वत्थामा**—मातुल, परतन्त्रमिदमकिंचित्करं च ।

**कृपः**—वत्स, न खलु परतन्त्रं नाकिंचित्करं च । पश्य ।

[2]भवेदभीष्ममद्रोणं धार्तराष्ट्रबलं कथम् ।
यदि [3]तत्तुल्यकक्षोऽत्र भवान्धुरि न युज्यते ॥ २६ ॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं किं पुनर्यौ[4]धिष्ठिरबलम् । [5]तदेवं मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामे[6]वाभ्यपेक्षमाणस्तिष्ठतीति ।

**अश्वत्थामा**—यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय । तदहं गत्वा [7]तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयंग्रहणप्रणयसमाश्वासनया मन्दसंतापं करोमि ।

**कृपः**—वत्स, एवमिदम् । अतस्तमेवोद्देशं गच्छावः ।

(इति परिक्रामतः ।)

([8]ततः प्रविशतः कर्णदुर्योधनौ ।)

**दुर्योधनः**—अङ्गराज,

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ २७ ॥

---

इति विश्वः । सेनापतेर्भावः सैनापत्यम् ॥ **भवेदिति** । धृतराष्ट्रबलं कथं भवेत्किं भवेदित्यर्थः । अत्र धुरि धुरायाम् ॥ २६ ॥ परिकरः पुरस्कारः ॥ उद्देशं प्रदेशम् ॥ **तेजस्वीति** । तेजस्वी पुरुषः पारं बाहुभ्यां व्रजतीत्यन्वयः । प्लवः कोलकम् ।

---

१. 'अभिषिक्तमत्रभवन्त', 'अभिषिक्त भवन्त' २. 'भवेदभीष्मद्रोणं हि धृतराष्ट्रबलं'. ३. 'तत्तुल्यकर्मात्र भवान्धुर्यो न युज्यते', 'तत्तुल्यकक्षोऽत्रभवान्धुर्यो नियुज्यते' इति पाठौ. ४. 'युधिष्ठिरबलम्'. ५ 'अहं च मन्ये', 'एवं च मन्ये'. ६ 'अभ्युदीक्षमाणः'; 'प्रतीक्षमाणः', 'कौरवनाथो भवन्तमुद्वीक्षते' इत्यपि क्वचित्पाठ ७. 'तातवधविपन्नमनसं'. ८. '(ततः प्रविशति राजा कर्णश्च ।)' इति क्वचित्पाठः.

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः [1]शोकान्धमनसा तेन विमुच्य [2]क्षत्रधर्मकार्कश्यं [3]द्विजातिधर्मसुलभो दैन्यपरिग्रहः कृतः ।

**कर्णः**—राजन्, न खल्विदमेवम् ।

**दुर्योधनः**—[5]कथं तर्हि ।

**कर्णः**—[6]एवं किलास्याभिप्रायो यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति । [7]तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा [8]शस्त्रग्रहणमिति तथा कृतवान् ।

**दुर्योधनः**—(सशिर कम्पम् ।) एवमिदम् ।

**कर्णः**—एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्पर[9]क्षयमपेक्षमाणेन तेन [10]प्रधानपुरुषवध उपेक्षा कृता ।

**दुर्योधनः**—[11]उपपन्नमिदम् ।

**कर्णः**—अन्यच्च राजन्, [12]द्रुपदेनाप्यस्य बाल्यात्प्रभृत्यभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः ।

**दुर्योधनः**—साधु अङ्गराज, [13]साधु । निपुणमभिहितम् ।

**कर्णः**—न चायं ममैकस्याभिप्रायः । [14]अन्येऽभियुक्ता [15]अपि नैवेदमन्यथा मन्यन्ते ।

'उडुप तु प्लवः कोल' इत्यमरः । सख्ये सङ्ग्रामे ॥ २७ ॥ सूक्तं शोभनमुक्तम् । अभियुक्तैर्नीतिज्ञैः ॥ **न खल्विति** । इदमेवैतन्न वाच्यमित्यर्थः । किल

१ 'शोकान्धचेतसा'. २. 'क्षात्रधर्मकार्कश्य'. ३. 'द्विजातिसुलभो मार्दवपरिग्रह.' इति बहुपुस्तकानां पाठ ४ 'राजन्कौरवेश्वर'. ५ 'कि तत्' इति क्वचित्पाठः. ६. 'एव किल द्रोणस्याभिप्राय आसीत्'; 'एव किल तस्याभिप्राय आसीत्'; 'एव किल तस्य मनसि'; 'एव किल तस्यासीच्चेत.' इति पाठान्तराणि. ७. 'तस्य च वधान्' इति पाठ.. ८. 'शस्त्रधारणम्'. ९. 'क्षयमुपेक्षमाणेन'. १०. 'प्रधाननृपवधे'. ११. 'उपपन्नमेतत्' १२. 'द्रुपदेन चास्य'. १३. 'साधु' इति क्वचिन्नास्ति. १४. 'अन्येऽप्यत्र योद्धारो नैतदन्यथा मन्यन्ते' इति पाठ.. १५. 'अपि' इति क्वचिन्नास्ति.

**दुर्योधनः**—एवमेतत् । कः संदेहः ।

दत्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ २८ ॥

**कृपः**—(विलोक्य ।) वत्स, एष [1]दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति । तदुपसर्पावः ।

(तथा कृत्वा ।)

**उभौ**—[2]विजयतां कौरवेश्वरः

**दुर्योधनः**—(दृष्ट्वा ।) अये कथं कृपोऽश्वत्थामा च । (आसनादवतीर्य कृप प्रति ।) गुरो, अभिवादये । ([3]अश्वत्थामानमुद्दिश्य ।) आचार्यपुत्र,

एह्यस्मदर्थहततात परिष्वजस्व
[4]क्रान्तैरिमैर्मम निरन्तरमङ्गमङ्गैः ।
स्पर्शस्त[5]वैष भुजयोः सदृशः पितुस्ते
[6]शोकेऽपि नो विकृतिमेति तनूरुहेषु ॥ २९ ॥

(आलिङ्ग्य पार्श्वे उपवेशयति ।)

(अश्वत्थामा बाष्पमुत्सृजति ।)

**कर्णः**—[7]द्रौणायने, अलम[8]त्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

**दुर्योधनः**—आचार्यपुत्र, को विशेष आवयोरस्मिन्[9]व्यसनमहार्णवे । पश्य ।

---

प्रसिद्धौ । तथा शस्त्रत्यागम् ॥ बाल्यात्प्रभृति शैशवादारभ्य ॥ **दत्त्वेति** । सोऽतिरथो महारथो द्रोणोऽभय दत्त्वा कथमन्यथार्जुनेन वध्यमान जयद्रथमुपेक्षेत । चेदेव नेत्यन्वय ॥ २८ ॥ सूतपुत्रेण सारथिसुतेन कर्णेन । 'सूत क्षत्ता च सारथि ' इत्यमर । 'न्यग्रोधो बहुपाद्वट ' इत्यमर । विजयतामित्यत्र 'विपराभ्यां जे ' इति तङ् ॥ **एहीति** । एह्यागच्छ । तनूरुहेषु लोमसु ॥ २९ ॥

---

१. 'कौरवराज ' २. 'विजयता विजयता राजन्' ३ '(अश्वत्थामान प्रति ।)' ४. 'क्लान्त शुचा', 'क्लान्तैरिद', 'कान्तैरिद' इति पाठान्तराणि. ५. 'तथैव'; 'तवैव'. ६. 'शोकेऽपि यो महति निर्वृतिमादधाति' इति क्वचित्पाठ.. ७ 'द्रोणपुत्र, अलमत्यन्तावेगेनात्मान शोकसागरे प्रक्षेप्तुम्' इति पाठः. ८. 'अत्यर्थम्' इति क्वचिन्नास्ति. ९. 'व्यसनार्णवे'.

तातस्तव प्रणयवान्स[1] पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि ।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३० ॥

**कृपः**—वत्स, यथाह कुरुपतिस्तथैवैतत्[2] ।

**अश्वत्थामा**—राजन्, एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम् । किं तु

मयि जीवति यत्तातः[3] केशग्रहमवाप्तवान्[4] ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः[5] स्पृहाम् ॥ ३१ ॥

**कर्णः**—द्रौणायने, किमत्र[6] क्रियते यदा[7] तेनैव सर्वपरिभवपरि[8]-त्राणहेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा[9] नीतः ।

**अश्वत्थामा**—अङ्गराज, किमाह भवान्किमत्र[10] क्रियत इति । श्रूयतां यत्क्रियते[11] ।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः[12] पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीप[13]
क्रोधान्धस्तस्य तस्य स्वयमपि[14] जगतामन्तकस्यान्तकोऽहम् ॥ ३२ ॥

---

**तात इति।** स तव तातो मे पितु सखा मित्रमित्यन्वय ।तत्त्वमेव जानीहीत्यन्वय । शुचा शोकेन ॥ ३० ॥ **मयीति।** 'पुत्रेभ्य' इत्यत्र 'स्पृहेरीप्सित' इति चतुर्थी ॥३१॥ **यो य इति।** पाण्डवीना पाण्डवसवन्धिनीनाम्। चमूना सेनानाम्। अधिकवयास्तरुणो वृद्धश्च। तत्कर्मसाक्षी तातवधसाक्षाद्द्रष्टा । 'साक्षाद्द्रष्टरि सज्ञायाम्' इति साक्षीति सिध्यति । प्रतीपो विपरीतकारी । तस्य जगतामन्तकस्य

---

१. 'स यथा तथा मे' इति पाठः २. एतदनन्तरम् 'कर्ण.—किमत्र विचारेण । अश्वत्थामा—राजन्येव वादिनि युक्तमेव शोकसागरमुल्लङ्घयितुम्' एवविधः पाठः क्वचिद्दृश्यते. ३. 'मत्तात.'. ४. 'केशग्रहणमाप्तवान्' इति पाठः. ५. 'अपुत्रिण.'. ६. 'अत्र' इति क्वचिन्नास्ति. ७. 'यदा तेनैव' इत्यत्र 'यदनेन' इति क्वचित्पाठः. ८. 'सर्वपरिभवत्राणहेतुना'. ९. 'एतादृशीम्';'ईदृशीम्'. १०. 'अत्र' इति क्वचिन्नास्ति. ११. 'यत्क्रियते तत्'. १२. 'मदात्'; 'बलः'. १३. 'प्रतीपम्'. १४. 'स्वयमिह'.

अपि च । भो जामदग्न्यशिष्य कर्ण,

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविध परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ ३३ ॥

**दुर्योधनः**—आचार्यपुत्र, तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम् ।

**कृपः**—राजन्, सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसित समरभर. । तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थ. । किं पुनर्यौधिष्ठिरबलम् । अतोऽभिषिच्यतां सैनापत्ये ।

**दुर्योधनः**—सुष्ठु युज्यमानमभिहितं युष्माभिः । कि तु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य ।

**कृपः**—राजन्, असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम् । अस्यापि तदेवारिकुलमनुशासनीयम् । अतः किमस्य पीडा न भविष्यति ।

विनाशकस्य । अन्तको यमो विनाशको वा ॥ ३२ ॥ जामदग्न्य परशुराम' । **देश इति** । शोणित रक्तम् । क्षात्रात्क्षत्रियकृतात्परिभव । तत्रैव जात इति शेष । आहिता उपस्थिता ये शत्रवस्तेषा घस्मराणि भक्षकाणि । अत एव गुरूणि । भास्वन्ति दीप्यमानानि । रामेण परशुरामेण कृत क्षत्रियनाशनम् ॥ ३३ ॥ सुमहानतिशयित । वोढु धर्तुम् ॥ अयमर्थोऽभिषेकरूप. ॥

---

१. 'शोणितभरै:' २. 'केशग्रहात्'. ३. 'हेतिघस्मर–' ४. 'नो'. ५. 'द्रौणायनि '. ६. 'तथाविधपरिभवस्यानन्यपुरुषसाधारणस्य ते वीरभावस्य च किमस्त्यसदृशम्' इति पाठ ७ 'युधिष्ठिरबलम्'. ८. एतदनन्तर क्वचित् '(इत्यङ्गुरीयक ददाति।) कर्ण.—(सहर्षम् ।) महान्परः प्रसाद । कृपः—असदृशपरिभवसागरे मज्जन्तमेनमङ्गराजस्यापि नोपेक्षितु युक्तम् । अश्वत्थामा—(साटोपम् ।) राजन्, राजन्, युक्तायुक्तविचारणया किमद्यापि।' इति पाठो दृश्यते. ९. 'अस्यापि च'; 'अस्यापि' इत्यारभ्य 'भविष्यति' इत्यन्त क्वचिन्नास्ति.

**अश्वत्थामा**—[1]राजन्, किमद्यापि युक्तायुक्तविचारणया ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य [2]दोःशालिना-
[3]मपैतु [4]नृपकाननातिगुरुरद्य भारो भुवः ॥ ३४ ॥

[5]**कर्णः**—(विहस्य ।) वक्तुं सुकरमिदं दुष्करमध्यवसितुम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः ।

**अश्वत्थामा**—[6]अङ्गराज, एवमिदम् । बहवः कौरवबलेऽत्र शक्ताः । किं तु दुःखोपहतः शोकावेगवशाद्ब्रवीमि न पुनर्वीरजनाधिक्षेपेण ।

**कर्णः**—मूढ, दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं नैवंविधाः प्रलापाः ।

**प्रयत्नेत्यादि** । हे मातुल (१ राजन्), त्वं तावन्निशां व्याप्य शेषे स्वपिहि । कीदृशः सन् । स्तुतिभिर्मागधादिकृतस्तवैरद्य प्रयत्नेन परिबोधितः प्रबोधितः । तथा च त्वं स्तवादिनापि परिहृतभगिनीपतिशोकः समस्तां निशां व्याप्य शयनं विधेहीति भावः । 'शेषे' इति 'शीङ् स्वप्ने' लटि मध्यमपुरुषैकवचने साधु । 'निशाम्' इत्यत्र 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अद्य पुनर्भुवनमेतादृशमस्तु । कीदृशम् । केशवशून्यं पाण्डवशून्यं सोमवंशशून्यं च । दोःशालिनां बाहुबलशालिनां वीराणामपि रणकथा युद्धवार्ताद्य मया परिसमाप्यते । अद्य भुवो भारोऽपैतु दूरं यातु । कीदृशः । नृपा एव काननानि वनानि तैरतिगुरुः । उपचित इत्यर्थः । 'दोषा भुजा भुजः' इत्यमरः ॥ ३४ ॥ 'ननु हे स्पर्धा-

१. 'राजन्, कौरवेश्वर'. २ 'दोःशालिना' ३ 'व्यपैतु', 'अपैति' ४ 'रिपुकाननातिगुरुः'. ५. 'कर्णः—द्रोणात्मज, वक्तुं सुकरमिदमध्यवसितुं दुष्करम्', कर्णः—वक्तुं सुकरमिदमध्यवसितुं दुष्करम्', 'कर्णः—(विहस्य ।) द्रोणात्मज, वक्तुमिदं सुकरं दुष्करमध्यवसितुम्' इति पाठान्तराणि ६. 'अङ्गराज, एवं बहवः शक्ताः । किं तु दुःखोपहतः शोकावेगवशात्'; 'अङ्गराज, दुःखोपहतः शोकावेगवशात्'; 'अङ्गराज, एवम् । बहवः कौरवबलेऽत्र शक्ताः । किं तु दुःखोपहतशोकावेगवशात्' इति पाठान्तराणि ७ 'द्रोणायने'.

**अश्वत्थामा**—(सक्रोधम्।)[1] अरे रे राधागर्भभारभूत,[2] सूतापसद,[3] ममापिनामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण। पश्य।

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं[4] प्रतिकरोम्यस्त्रेण नास्त्रेण येत्[5]॥ ३५॥

**कर्णः**—(सक्रोधम्।) अरे रे वाचाट, वृथाशस्त्रग्रहणदुर्विदग्ध, बटो,

निर्वीर्य वा सवीर्यं वा मया नोत्सृष्टमायुधम्।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना॥ ३६॥

अपि च।

सूतो वा सूतपुत्रो वा यो[6] वा स्यो वा भवाम्यहम्।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम्॥ ३७॥

---

यामवरे पदम्' इति भरत। **निर्वीर्यं गुर्विति**। गुरुशापेति परशुरामदत्तशापात्। कर्णः किल बालकः स्वीयक्षत्रियजातिं सगोप्यास्त्रविद्याशिक्षार्थं परशुरामस्थानं गतः। तेनास्त्रविद्या तस्मै दत्ता। ततः कर्णोऽयं क्षत्रिय इति तेन ज्ञातम्। अथ तवास्त्रविद्या वीर्यवती न भवतु मम छलनादिति परशुरामस्तं शशाप-इति पुराणम्। तवेव यथा तवेत्यर्थः। स्तुतिश्च वंशकीर्तनं च। यद्वा। स्तुतिरूपं यद्वंशकीर्तनम्। प्रतिकरोमि प्रतीकारविषयं करोमि। अस्रेण नेत्रजलेन॥ ३५॥ **निर्वीर्य वेति**। उत्सृष्टं त्यक्तम्॥ ३६॥ **सूत इति**। सूतः सारथिः। स्यो वेति। त्यच्छब्दस्य प्रयोगः। स छान्दसोऽपि क्वचिद्भाषाया प्रयुज्यते। 'सो वा' इत्यपि पाठः॥ ३७॥ **स भीरुरिति**। प्रथितः ख्यातम्।

१. '(सरोषम्।)'. २ 'राधायाः सुत' इति क्वचित्पाठः ३ 'सूतापसद' इत्यस्मादनन्तरं केषुचित्पुस्तकेषु 'किमेवमाक्षिपसि। कर्णः—सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्। दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम्॥ अश्वत्थामा—किमाह भवान्। ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः' इति पाठो वर्तते. ४. 'कृताप्रियः'. ५. 'किम्'. ६. 'यो वा को वा'; 'यो वा सो वा'.

**अश्वत्थामा**—(सक्रोधम् ।) अरे रे रथकारकुलकलङ्क, अरे राधा-गर्भभारभूत, आयुधानभिज्ञ, तातमप्यधिक्षिपसि । अथ वा

स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृत यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा ॥ ३८ ॥

**कर्णः**—(विहस्य ।) एवं भीरुरहम् । त्वं पुनर्विक्रमैकरसं स्वपितरमनुस्मृत्य न जाने किं करिष्यसीति । महान्मे सशयो जातः । अपि च रे मूढ,

यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ ३९ ॥

**अश्वत्थामा**—(सक्रोधं सकम्पं च ।) दुरात्मन्, राजवल्लभ, प्रगल्भ, सूतापसद, असंबद्धप्रलापिन्,

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।

---

आजौ युद्धे । प्रतिदिन तेन यत्कृत तद्वसुधा वेत्तीत्यन्वयः । यत्तेनात्र कथमपि शोकविकलेन परित्यक्त तत्र स युधिष्ठिर साक्षी ॥ ३८ ॥ **यदीति** । अशस्त्रपाणयस्त्यक्तास्त्रा । उदायुधानुद्यतास्त्रान् । किं न निवारयन्ति । किं तु निवारयन्त्येव । अनेन द्रोणेन । दलने खण्डने । उदासितमुदासीनीभूतम् । स्त्रियेवेति । यथा स्त्रियोदास्यते इत्यर्थः । 'चक्र सैन्यरथाङ्गयोः' इति विश्वः ॥ ३९ ॥ **कथमपीति** । तव शिरस्येष वामश्चरणो वामपादो मया न्यस्यते इत्यन्वय । आध्मा-

---

१. 'प्रतिदिशम्'. २. 'सत्यव्रतधनः' ३. 'त्वं पुनर्विक्रमैकरसः । तव पितरमनुस्मृत्य महान्मे संशयो जातः ।', 'पुनर्विक्रमैकरसं तव पितरमनुस्मृत्य महान्मे सशयो जातः ।'; 'त्वं पुनस्त्त विक्रमैकधन स्वपितरमनुस्मृत्य न जाने किं करिष्यसि । महासशयो मे जातः ।' इति नानाविधः पाठः.

तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ ४० ॥

(इति तथा कर्तुमुत्तिष्ठति ।)

**कृपदुर्योधनौ**—वत्स, मर्षय मर्षय । (इति निवारयत ।)

(अश्वत्थामा चरणप्रहार नाटयति ।)

**कर्णः**—(सक्रोधमुत्थाय । खड्गमाकृष्य ।) अरे दुरात्मन्, ब्रह्मबन्धो, आत्मश्लाघ,

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम् ।
अनेन लूनं खड्गेन पतितं द्रक्ष्यसि क्षितौ ॥ ४१ ॥

**अश्वत्थामा**—अरे मूढ, जात्या काममवध्योऽहम् । इयं सा जातिः परित्यक्ता । (इति यज्ञोपवीत छिनत्ति । पुनश्च सक्रोधम् ।)

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥ ४२ ॥

---

यमानस्याध्मातस्य ॥ ४० ॥ वाचाल बहुभाषक । ब्रह्मबन्धो अग्राह्यनामन् । 'ब्रह्मबन्धुरधिक्षेपे निर्देश्येऽपि निगद्यते' इत्यमरः । **जात्येति** । चरण लून सन्क्षितौ पतित द्रक्ष्यसीत्यन्वय । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमर ॥ ४१ ॥ **अद्येति** । त्यक्त्वास्त्रमिति शेष । मिथ्याप्रतिज्ञो मया तव वधात्तेन च तदकरणा-

---

१ 'एव', 'एवम्' २ '(इत्युत्तिष्ठति ।)' इति क्वचित्पाठः. ३. 'गुरुपुत्र'. ४ 'आत्मश्लाघिन्'. ५. 'तावत्' ६. 'इमम्' ७. 'उद्यतम्', 'उद्धतम्'. ८. 'पातित'. ९. 'वेत्स्यसि' १०. 'अश्वत्थामा—अरे मूढ, किं नाम जात्या काममवध्योऽहम् । इय सा जातिस्त्यक्ता । (इत्युपवीत छिनत्ति ।)' इति क्वचित्पाठ, क्वचित्तु 'अश्वत्थामा—अरे रे, किं जात्या तावदवध्योऽहं यत एवं ब्रवीषि । गृहाण शस्त्रम् । इय सा जाति परित्यक्ता । (इति यज्ञोपवीत भूमौ निक्षिपति ।) गृहाणास्त्र व्रज त्यक्त्वा मौलौ वा धारयाञ्जलिम् । अद्य मिथ्याप्रतिज्ञोऽसौ गाण्डीवी क्रियते मया ॥ कर्ण—गृहाणास्त्रम् । (इत्यन्योन्यव्यसन कुरुतः ।) राजा—अङ्गराज, अङ्गराज, अलमाचार्यपुत्रेण सह शस्त्रग्रहणेन । गुरुपुत्र, अलमङ्गराजेन सह शस्त्रग्रहणेन । (कृपोऽपि वारयति ।) अश्वत्थामा—मातुल, किं मा निवारयसि । समासादयतु तावत्तातनिन्दाप्रगल्भ. सूतकुलकलङ्को मद्भुजान्तरनिष्पेषसुलभ प्राणानामवसानम्' इत्येष पाठो वर्तते. ११. 'चेत्'. १२. 'अद्य'. १३. 'अधुना'.

(उभावपि खड्गमाकृष्यान्योन्य प्रहर्तुमुद्यतौ । कृपदुर्योधनौ निवारयत[1] ।)

**दुर्योधनः**—आचार्यपुत्र[2], शस्त्रग्रहणेनालम् ।

**कृपः**—वत्स, सूतपुत्र, शस्त्रग्रहणेनालम् ।

**अश्वत्थामा**—मातुल, मातुल, किं निवारयसि[3] । अयमपि तातनिन्दाप्रगल्भः सूतापसदो[4] धृष्टद्युम्नपक्षपात्येव ।

**कर्णः**—राजन्, न खल्वहं निवारयितव्यः ।

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ ४३ ॥

**अश्वत्थामा**—राजन्, मुञ्च मुञ्चैनम् । आसादयतु मद्भुजान्तरनिष्पेषसुलभमसूनामवसादनम् । अन्यच्च राजन्, स्नेहेन वा कार्येण वा यत्त्वमेनं[5] ताताधिक्षेपकारिणं दुरात्मानं मत्तः[6] परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते । पश्य ।

पापप्रियस्तव कथं गुणिनः सखायं[7]
सूतान्वयः[8] शशधरान्वयसंभवस्य ।
हन्ता किरीटिनमहं नृप मुञ्च कुर्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ ४४ ॥

(इति प्रहर्तुमिच्छति ।)

**कर्णः**—(खड्गमुद्यम्य ।) अरे वाचाट, ब्राह्मणाधम, अयं[9] न भवसि[10] ।

---

दिति भाव ॥ ४२ ॥ **उपेक्षितानामिति** । अवज्ञया धीरसत्त्वै सुभटैरुपेक्षिताना मित्यन्वय । मन्दानामेषा विकत्थना भवति । अतोऽत्र मया नोपेक्षा कर्तव्येति भाव । अत्रासिताना गेहवासिनाम् ॥ ४३ ॥ निष्पेषो यन्त्रणम् । अस्मत्तो मत्सकाशात् । **पापप्रिय इति** । अय पापस्तव कथ सखेत्यन्वय । कीदृश । प्रिय' प्रियसुहृदित्यर्थ । अन्वयो वश । अह किरीटिन हन्ता हनिष्यामि । ततो हे नृप मा मुञ्च । अह लोक कर्णरहितमर्जुनरहित च कुर्या करिष्ये ॥ ४४ ॥

---

१ 'वारयत.'. २. 'सखे, आचार्यपुत्र'. ३. 'वारयसि'. ४ 'सूतकुलाधम'. ५ 'स्नेहेन कार्येण वा त्वमेन' इति पाठ. ६. 'ताताधिक्षेपप्रगल्भमस्मत्तो रक्षसि' इति क्वचित्पाठ. ७. 'सहायः'. ८. 'सूतात्मज.'. ९. 'असौ', 'अयम्'. १०. 'एवम्'.

राजन्, मुञ्च मुञ्च। न खल्वहं वारयितव्यः। (हन्तुमिच्छति।)

(दुर्योधनकृपौ निवारयत।)

**दुर्योधनः**—कर्ण, गुरुपुत्र, कोऽयमद्य युवयोर्व्यामोहः।

**कृपः**—वत्स, अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः। स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः।

**अश्वत्थामा**—मातुल, न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम्।

**कृपः**—वत्स, अकालः खलु स्वबलप्रधानविरोधस्य।

**अश्वत्थामा**—मातुल, यद्येवम्,

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे।
बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे॥ ४९॥

(इति खड्गमुत्सृजति।)

**कर्णः**—(विहस्य।) कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम।

**अश्वत्थामा**—ननु रे, अपरित्यक्तमपि भवादृशैरायुधं चिरपरित्यक्तमेव निष्फलत्वात्।

**कर्णः**—अरे मूढ,

रथकारं सारथिं। शातयितुं तनूकर्तुम्॥ **अयमिति**। उपेयाद्गच्छेत्॥ ४५॥

१. 'कृप—भो अश्वत्थामन्, ननु भो कर्ण, अन्यदेव प्रकृतमन्यत्रावेग.। कोऽयमद्य युवयोर्व्यामोहः। स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्मत्त एव उपपद्यते इति नाय पन्था'।' इति क्वचित्पाठः. २. 'आयुष्मन्'. ३. 'आवेश'. ४. 'शादयितुम्'. ५. 'प्रियसखमसु'. ६. '(इति खड्गमुत्सृजति।) कर्णः—(विहस्य।) अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात्। धृतायुधो यावदहं' इति क्वचित्पाठः.

धृतायुधो यावदहं तावदन्यैः किमायुधैः।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ ४६ ॥

(नेपथ्ये।)

आः दुरात्मन्, द्रौपदीकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद, चिरस्य खलु कालस्य मत्संमुखीनमागतोऽसि । क्षुद्रपशो, क्वेदानी गम्यते। अपि च। भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः, श्रृण्वन्तु भवन्तः।

कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥४७॥

(सर्वे आकर्णयन्ति।)

अश्वत्थामा—(सोत्प्रासम्।) अङ्गराज, सेनापते, जामदग्न्य-

---

**धृतायुध इति।** ममास्त्रेण यन्न सिद्धमित्यन्वयः ॥ ४६ ॥ इह श्लोके दम्भ आरभटी वृत्तिः। 'कपटानृतदम्भेषु वृत्तिरारभटी मता' इति भरतः ॥ सौबलो योधभेदः ॥ **कृष्टेति।** आसवो मद्यम्। भुजपञ्जरे बाहुमध्ये। कथं कौरवा इति। कच्छादिपाठान्मनुष्यतत्स्थयोरिति वुञ्प्रसक्तः। अत्रामनुष्यत्वेन विवक्षणान्न वुञ्। ततः 'तस्येदम्' इत्यण्। जनपदविवक्षाया वाण् ॥ ४७ ॥ 'सोत्प्रासः

---

१. 'बाहुशालिन्'. २ 'मत्समुखीगतोऽसि' ३. 'स्पृष्टा'. ४ 'शिरोरुहेषु पशुना'. ५. 'कुरूणां' ६ 'मद्भुजगोचरे' ७. 'कौरव' ८ 'अश्वत्थामा—(सोपहासम्।) अङ्गराज। कर्ण—किमाह भवान्। अश्व०—सेनाधिपते। कर्णः—तत्र कः संदेहः। अश्व०—जामदग्न्यशिष्य। कर्ण—बाढम्। अश्व०—द्रोणोपहासिन्। कर्णः—एवमेतत्। अश्व०—त्वयोक्तम्। कर्ण—किं मयोक्तम्। अश्व०—('धृतायुधो यावदहं' इति पठति।) कर्ण—बाढमुक्तम्। अश्व०—इदं महत्कदनं संवृत्तम्। कर्ण—किं जातम्। अश्व०—भीमः कथयति। कर्णः—किम्। अश्व०—श्रूयताम्। कर्ण—किं कथ्यताम्। अश्व०—('कृष्टा येन' इत्यादि पठति।) तद्भीमाद्दुःशासनं संरक्ष्यतां युवराजः।' इत्यपरः पाठः। ९. '(सोत्प्रासम्।)' इति क्वचिन्नास्ति १०. 'जामदग्न्यास्त्रशिष्य'.

शिष्य, द्रोणोपहासिन्, भुजबलपरिरक्षितसकललोक, ('धृतायुध' (३।४६) इति पठित्वा।) इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं सांप्रतं भीमाद्दु शासनम् ।

**कर्ण**—आ., का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य छायामप्याक्रमितुम् । युवराज, न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । (इति निष्क्रान्त ।)

**अश्वत्थामा**—राजन्कौरवनाथ, अभीष्मद्रोणं सप्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव ।

**दुर्योधनः**—आ, शक्तिरस्ति दुरात्मन पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य छायामप्याक्रमितुम् । वत्स, न भेतव्यं न भेतव्यम् । कः कोऽत्र भोः । रथमुपनय । (इति निष्क्रान्त ।)

(नेपथ्ये कलकल ।)

**अश्वत्थामा**—(ससंभ्रमम् ।) मातुल, कष्टं कष्टम् । एष भ्रातुः प्रतिज्ञाभङ्गभीरु किरीटी समं दुर्योधनराधेयौ शरवर्षैरभिद्रवति । सर्वथा पीतं दुःशासनशोणितं भीमेन । न खलु विषहे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम् । अनृतमनुमत नाम । मातुल, शस्त्रं शस्त्रम् ।

---

समनाक्स्मितम्' इत्यमर ॥ बाढ निश्चितम् ॥ सममेकदैव । अह विषहे सोढु

---

१ 'आ., शक्तिरस्ति वृकोदरस्य' २. 'युवराजस्य'. ३. 'अतिक्रमितुम्', 'लङ्घयितुम्' ४ 'वनम्'. ५. 'आ , का शक्तिर्दुरात्मन ', 'आ', का शक्तिरस्ति दुरात्मन.'. ६. 'अन्यस्य वा' इति क्वचिन्नास्ति ७. 'शस्त्रपाणौ' इति क्वचिन्नास्ति. ८. 'दु शासनस्य'. ९. 'लङ्घयितुम्'. १०. 'वत्स, न भेतव्यम्' इति प्राठ'. ११. '(ससंभ्रमम् ।)' इत्यत्र '(अग्रतो विलोक्य ।)' इति बहुपुस्तकाना पाठ . १२. 'मातुल, हा धिक्कष्टम्', 'मातुल, मातुल, कष्टम्'. १३. 'एष खलु'. १४. 'शरवर्षैर्दुर्वारैरभिद्रवति । हा कष्ट कष्टम् । सर्वथा पीत' इति बहुपुस्तकाना पाठः. १५. 'तन्न युक्त दुर्योधनस्यानुजस्यैता विपत्तिमुपेक्षितुम् । अनृतमनुमतं नाम । भगवन् शस्त्र' इत्यपि क्वचित्पाठः.

सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे ।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥ ४८ ॥

(इति खड्गं ग्रहीतुमिच्छति ।)

(नेपथ्ये ।)

महात्मन्, भारद्वाजसूनो, न खलु [1]सत्यवचनमुल्लङ्घयितुमर्हसि ।

कृपः—वत्स, अशरीरिणी [2]भारती भवन्तमनृतादभिरक्षति ।

अश्वत्थामा—कथमियममानुषी [3]वाग्नानुमनुते सङ्ग्रामावतरणं मम । सर्वथा पाण्डवपक्षपातिनो देवाः । भोः, कष्टं कष्टम् ।

दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् ।
दुर्योधनस्य कर्तास्मि किमन्यत्प्रियमाहवे ॥ ४९ ॥

मातुल, राधेयक्रोधवशादनार्यमस्माभिराचरितम् । अतस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव ।

कृपः—गच्छाम्यहमत्र प्रतिविधातुम् । भवानपि शिबिरसनिवेशमेव प्रतिष्ठताम् ।

([4]परिक्रम्य निष्क्रान्तौ ।)

## इति तृतीयोऽङ्कः ।

---

नाख्यामि ॥ **सत्यादिति ।** अनृतमसत्यम् । स्वर्गमिति । धिग्योगे द्वितीया । भीमादिति । 'भीत्रार्थानां भयहेतुः' इति पञ्चमी । अत्यक्तं मयेति शेषः ॥ ४८ ॥ भारती सरस्वती ॥ **दुःशासनस्येति ।** उदासितम् । मयेति शेषः । किमन्यत्प्रियं दुर्योधनस्याहं कर्ता करिष्ये ॥ ४९ ॥ अनार्यमनर्हम् ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धर तस्य कृतावयासीदङ्कस्तृतीयो वरटिप्पनेऽत्र ॥

इति तृतीयोऽङ्कः ।

---

१ 'सत्यवचनमनुल्लङ्घितपूर्वमुल्लङ्घयितुम्'. २. 'वाणी'. ३ 'नानुमनुते सङ्ग्रामावतरणं मे । भोः, कष्टम् । आः, पक्षपातिनो देवा अपि पाण्डवानाम् । सर्वथा पीतं दुःशासनशोणितं भीमेन । भोः, कष्टं कष्टम् ।' इति बहुपुस्तकानां पाठः. ४. '(उभौ परिक्रम्य निष्क्रान्तौ ।)' इति पाठः.

चतुर्थोऽङ्कः ।

(ततः प्रविशति प्रहारमूर्छितं रथस्थं दुर्योधनमपहरन्सूतः ।)

(सूतः ससम्भ्रमं परिक्रामति ।)

(नेपथ्ये ।)

भो भोः, बाहुबलावलेपप्रवर्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राणद्रविणसंचया नरपतयः, संस्तभ्यन्तां निहतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभयपरिस्खलत्प्रहरणानि रणात्प्रद्रवन्ति बलानि ।

सूतः—(विलोक्य ।) कथमेष धवलचपलचामरचुम्बितकनककमण्डलुना शिखरावबद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसंमर्दविषमोद्धातकृतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरचक्रपराक्रमप्रसरः प्रद्रुतमात्मबलमाश्वासयन्कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति । हन्त, जातमस्मद्बलानामवलम्बनम् ।

(नेपथ्ये कलकलानन्तरम् ।)

भो भोः, अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः, न भेतव्यं भेतव्यम् । अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो रभस-

'अवलेपः स्मृतो गर्वः' इति विश्वः । दोहदो 'दोहर' इति प्रसिद्धः । प्राणा एव द्रविणमिति रूपकम् । संस्तभ्यन्तां स्थिरीक्रियन्ताम् । बीभत्सो भयानकः । प्रहरणमस्त्रम् ॥ चुम्बितं संबद्धम् । शिखरमग्रम् । वैजयन्ती पताका । कलेवरं शरीरम् ॥ तोमरोऽस्त्रभेदः । पीवरं मांसलम् । क्षतजं रक्तम् । रभस आवेगस्तं गन्तुं

१. 'बाहुबलाहङ्कारप्रवर्तित–'. २. 'कौरवकुलपक्षपात–'. ३. 'सस्तभ्यन्ता सस्तभ्यन्ता'. ४. 'हत–'. ५ 'विषाद–'. ६. 'परिस्खलित–'. ७. 'द्रवन्ति'; 'विद्रवन्ति' ८. 'धवलचपलचारुचामर–'; 'धवलचारुचामर–'. ९. 'शिखराबद्ध–', 'शिखरावनद्ध–'. १०. 'विषमोत्खात–' ११. 'परबलपराक्रमप्रद्रुतमात्मबलं', 'परचक्रपराक्रमप्रसर. प्रतिपक्षमीक्षमाणमात्मीयबलं'; 'परबलपराक्रमप्रसर. प्रद्रुतमात्मबलं' इति नानाविधः पाठः १२. 'जातमेव बलानामवलम्बनम्' इति क्वचित्पाठः. १३ 'रणरभसगामी'.

गामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः कौरवराजस्य [1]द्यूतनिर्जितो दासः [2]पार्थमध्यमो भीमसेनः सर्वान्भवतः [3]साक्षीकरोमि । श्रूयताम् ।

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य [4]मिषत कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिण·
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षस· ॥ १ ॥

**सूतः**—(श्रुत्वा । सभयम् ।) [5]कथमासन्न [6]एव दुरात्मा [7]कौरवराजपुत्रमहावनोत्पातमारुतो [8]मारुति· । [9]अनुपलब्धसंज्ञश्च महाराजः । भवतु । [10]दूरमपहरामि स्यन्दनम् । कदाचिद्दुःशासन इवास्मिन्न[11]प्ययमनार्योऽनार्यमाचरिष्यति । ([12]त्वरित परिक्रम्यावलोक्य च ।) अये, अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादप । [13]उचिता विश्रामभूरियं समरव्यापारखिन्नस्य वीरजनस्य । [14]अत्र स्थितश्चायाचिततालवृन्तेन हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन [15]सरसीसमीरणेनामुना गत-

---

शील यस्य स रभसगामी । राज्ञ इति । मृषत सहिष्णो । कोष्णमीषदुष्णम् । 'कोष्ण कवोष्ण मन्दोष्णम' इत्यमरः । तस्य दुःशासनस्य । वक्षसो हृदयात् । असृक्छाया पीतमित्यन्वय । करजो नख ॥ १ ॥ मारुतिर्भीमः । सवाहितो मिलित. । 'न्यग्रोधो बहुपाद्वट·' इत्यमर· । अयाचिततालवृन्तं स्वयमुपस्थितव्यजनम् । हरिचन्दन चन्दनभेद । परिणामो विपाक. । प्रवेक्ष्यति प्रवेश कार-

१.'जितदास' २ 'पाण्डवमध्यम.' ३.'साक्षिण करोमि'. ४.'च तथा', 'मृषत'. ५. 'अये' ६ 'एषः'; 'एवासौ'. ७. 'कौरववनोत्पातमारुत' ८. 'मारुति' इति क्वचिन्नास्ति. ९. 'अनुपलब्धसंज्ञश्च तावदत्र महाराज', 'अनुपलब्धसंज्ञश्च ताव-महाराजः'. १०. 'सुदूरमपनयामि', 'दूरमपसारयिष्यामि'. ११ 'अयम्' इति क्वचिन्नास्ति. १२. 'त्वरिततर'. १३ 'उचितेय विश्रामभूमि'. १४. 'अत्रस्थोऽय मयोपवीजिततालवृन्तेन', 'अत्रस्थोऽयमयाचिततालवृन्तेन'; 'अत्रस्थश्चायमयत्नोपवीजिततालवृन्तेन' इति पाठान्तराणि. १५. 'सरसीसमीरणेन च विगतक्लम.' इति पाठ..

क्षमो भविष्यति महाराजः । लूनकेतुश्चायं[1] रथोऽनिवारित एव प्रवेक्ष्यति छायामिति । (प्रवेश रूपयित्वा ।)[2] कः[3] कोऽत्र भोः । (समन्तादवलोक्य ।) कथं न कश्चिदत्र[4] परिजनः । नूनं तथाविधस्य[5] वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन शिबिरसंनिवेशमेव प्रविष्टः । कष्टं भोः, कष्टम् ।

दत्त्वा[6] द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन्हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाध्यामप्यरीणां लघुमिव[7] समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं[8] दैवमेतावतापि ॥ २ ॥

(राजानमवलोक्य ।) कथमद्यापि[9] चेतनां न लभते महाराज[10] । भोः, कष्टम् । (निश्वस्य ।)

मदकलितकरेणुभज्यमाने[11]
विपिन इव प्रकटैकशालशेषे ।

---

यिष्यति । छत्रमित्यादावानीयतामिति शेषः । **दत्त्वेति** । पार्थादभयं दत्त्वापि द्रोणेन सिन्धुराजो न रक्षित इत्यन्वयः । भीमसेनेन प्रतिज्ञां पूरयित्वा कर्म कृतमित्यन्वयः । अरीणां दुःसाध्यां दुःखसाध्याम् । तृणमिव कर्मातिशीघ्रं कृतमित्यर्थः । 'लघुम्' इति पाठे प्रतिज्ञाविशेषणम् । वस्तुतो गुर्वीमपि लघ्वीमिवेत्यर्थः । एतावतापि दैवं कुरुकुलविमुखं नाहं मन्ये । अपि त्वपरमपि करिष्यतीति भावः । 'कुरुकुलनिधने' इति पाठे कुरुकुलनाशे सकामं पूर्णमनोरथं दैवं नाहं मन्य इत्यर्थः ॥ २ ॥ **मदेति** । मदेन मत्ततया । कलितं सबद्धं । करेणुर्हस्ती । प्रकटं स्फुटं । एकः शालः शङ्कुतरुर्वृक्षमात्रं वा शेषोऽवशेषो यत्र । 'शालः शङ्कुतरुर्मतः' इति विश्वः ।

---

१ 'लूनकेतु' इत्यस्मात्प्राक् '(ऊर्ध्वमवलोक्य ।)' इति कविवचनं केषुचित्पुस्तकेषु दृश्यते. २. 'छायाम् । (इति प्रवेशं रूपयित्वा ।)' इति पाठः. ३ 'कः कोऽत्र', 'कः कोऽत्र भोः । व्यजनं चामरं शीघ्रमुपनयतु । (दिशोऽवलोक्य ।) कथं न कश्चिदत्र परिजनः । नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधे सति स्वामिनि त्रासात्' इत्यपि क्वचित्पाठः. ४. 'अत्र' इति क्वचिन्नास्ति. ५ 'तथाभूतस्य'. ६. 'द्रोणेनाकृष्य पार्थादभयमपि च न संरक्षितः' इति पाठान्तरम्. ७. 'तृणमिव'. ८. 'कुरुकुलनिधने'. ९. 'कथमद्यापि न चेतनामुपलभते महाराजः' इति पाठः. १० 'स्वामी'. ११. 'करीन्द्रभज्यमाने'.

हतसकलकुमारके कुलेऽस्मि-
स्त्वमपि विधेरवलोकित कटाक्षैः ॥ ३ ॥

ननु भो हतविधे, भरतकुलविमुख,

अक्षतस्य गदापाणेरनारूढस्य संशयम् ।
एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥ ४ ॥

**दुर्योधनः**—(शनैरुपलब्धसंज्ञ ।) आः, शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम् । वत्स दुःशासन, न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ननु सूत, प्रापय रथं तमेवोद्देशं यत्र वत्सो मे दुःशासनः ।

**सूतः**—आयुष्मन्, अक्षमाः संप्रति वाहास्ते रथमुद्वोढुम् । (अपवार्य ।) मनोरथं च ।

**दुर्योधनः**—(रथादवतीर्य सगर्वं साकूत च ।) कृतं स्यन्दनगमनकालातिपातेन ।

**सूतः**—(सवैलक्ष्य सकरुण च ।) मर्षयतु मर्षयतु देवः ।

**दुर्योधनः**—धिक्सूत, किं रथेन । केवलमरातिविमर्दसंघट्टसंचारी

---

'अनोकह कुट शाल ' इत्यमरः । हे राजस्त्वमपि ॥ ३ ॥ आकाश इति । 'पात्रस्याल्पतया यत्र पात्रं नैव प्रवेश्यते । आकाशे कर्णं दत्त्वाकाशे लक्ष्य बद्धेति वोच्यते ॥' इति भरतः । **अक्षतस्येति** । अनारूढस्यागतस्य ॥ ४ ॥ स्वैरं मन्दं यथा स्यादेवम् ॥ वाहोऽश्वः । 'वाजिवाहार्वगन्धर्व–' इत्याद्यमरः । मनोरथं च ।

---

१ 'असि' २. '(स्वैरमुपलब्धसंज्ञ ।)', '(सधीरमुपलब्धसंज्ञ. ।)'; '(उपलब्ध संज्ञकः ।)'. ३. 'आः, का शक्तिरस्ति दुरात्मनः पवनतनयस्य वृकोदरहतकस्य', 'आः, का शक्तिरस्ति पवनतनयस्य वृकोदरस्य'. ४. 'मयि जीवति गदापाणौ वत्सदुःशासनस्य छायामप्यतिक्रमितुम्' इति पाठः. ५. 'सूत, प्रापय रथ तमुद्देश यत्र वत्सो दुःशासनस्तिष्ठति', 'सूत, प्रापय रथ तमुद्देश यत्र वत्स द्रक्ष्यामि' इति पाठौ. ६. 'देव, अक्षमास्ते वाहा संप्रति'; 'महाराज, अक्षमाः संप्रति वाहास्ते'. ७. 'रथमेनमुद्वोढुम्'. ८. 'वय च'. ९. 'किं'. १०. 'मर्षयत्वायुष्मान्'; 'मर्षयतु मर्षयत्वायुष्मान्'. ११. 'किं रथेनैव । अरातिविमर्दसंघट्टसंचारी दुर्योधनः । तद्गदामात्रसहाय एव समरभुवमवतरामि' इति पाठः.

दुर्योधनः खल्वहम् । तद्गदामात्रसहायः समरभुवमवतरामि ।

**सूतः**—देव, एवमेतत्।[1]

**दुर्योधनः**—यद्येवं[2] किमेवं भाषसे । पश्य ।

बालस्य मे प्रकृतिदुर्ललितस्य पापः
पापं[3] व्यवस्यति समक्षमुदायुधोऽसौ ।
अस्मिन्निवारयसि किं व्यवसायिनं मां
क्रोधो न नाम[4] करुणा न च तेऽस्ति लज्जा ॥ ५ ॥

**सूतः**—(सकरुण पादयोर्निपत्य ।) एतद्विज्ञापयामि । आयुष्मन्,[5] संपूर्णप्रतिज्ञेन[6] निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि ।

**दुर्योधनः**—(सहसा भूमौ पतन् ।) हा वत्स दुःशासन, हा मदाज्ञाविरोधितपाण्डव, हा विक्रमैकरस, हा मदङ्कदुर्ललित, हा अरातिकुलगजघटामृगेन्द्र, हा युवराज, क्वासि । प्रयच्छ मे प्रतिवचनम् । (इति निश्वस्य मोहमुपगत ।)

**सूतः**—राजन्, समाश्वसिहि समाश्वसिहि ।

मनोरथमप्युद्वोढुमक्षमा इति शेष ॥ **बालस्येति** । पाप नाशरूपम् । नाम संभावनायाम् । क्रोधस्ते नास्ति । करुणापि न । लज्जापि न । इत्यन्वय । करुणापि नेत्यत्र नकारस्यावृत्ति । यद्वा । 'क्रोधो न नापि करुणा न च तेऽस्ति लज्जा' इति पाठः ॥ ५ ॥ **युक्त इति** । युक्तो योजित. । हिरवधारणे । मयैव

१. 'सूत —एवमिदम् ।'; 'सूतः—आयुष्मन्, एवमेतत् । क संदेह ।' इति पाठौ. २. 'किमिति त्वमेव भाषसे' इति पाठ· ३. 'पास्यत्यसृग्जनसमक्षमुदायुधोऽसौ' इति पाठः. ४ 'नापि'; 'क्रोधो न नाम करुणापि च ते न लज्जा' इत्यपि पाठः. ५. 'देव'. ६. 'संपूर्णप्रतिज्ञेन भूतमिदानी वृकोदरेण । यत एव ब्रवीमि'; 'संपूर्णप्रतिज्ञेन भूत वृकोदरेण । अत एव ब्रवीमीति', 'सपूर्णमनोरथेन सत्यप्रतिज्ञेन भवितव्यमिदानी वृकोदरेण', 'सपूर्णप्रतिज्ञेन निवृत्तेन भवितव्य वृकोदरहतकेन । यत एव ब्रवीमि', 'सपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यं दुरात्मना वृकोदरहतकेन । अत एव ब्रवीमि' इति नानाविधः पाठः.

**दुर्योधनः**—(संज्ञां लब्ध्वा । निश्वस्य ।)

युक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन ।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितोऽन्यविनयं न च रक्षितोऽसि ॥ ६ ॥

(इति पतति ।)

**सूतः**—आयुष्मन्, समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—धिक्सूत, किमनुष्ठितं भवता ।

रक्षणीयेन सततं बालेनाज्ञानुवर्तिना ।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥ ७ ॥

**सूतः**—महाराज, मर्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथाना-मपहतचेतनत्वान्निश्चेतनः कृतो महाराज इत्यपहृतो मया रथः ।

**दुर्योधनः**—सूत, विरूपं कृतवानसि ।

तस्यैव पाण्डवपशोरनुजद्विषो मे
क्षोभैर्गदाशनिकृतैर्न विबोधितोऽस्मि ।
तामेव नाधिशयितो रुधिरार्द्रशय्यां
दौःशासनीं यदहमाशु वृकोदरो वा ॥ ८ ॥

---

त्वं न लालितो विलासं न नीतः । मया कीदृशेन । वृथाग्रजेन निष्फलज्येष्ठेन ॥ ६ ॥ **तस्यैवेति** । तस्यैव क्षोभैर्न विबोधितोऽस्मि मोहं गतोऽस्मि । कीदृशैः । गदावज्रकृतैः । दौःशासनीं दुःशासनसंबन्धिनीम् । तामेव शय्यां नाधिशयितोऽहं तत्रैव न शयितः । 'अधिशीङ्स्थासां कर्म' इत्याधारे कर्म । वृकोदरो वा नाधिशयितस्तामेव शय्यामित्यन्वयः ॥ ८ ॥ **रक्षणीयेनेति** । रक्षणीयेन रक्षणार्हेण । दुःशासनेनोपहारेणाहं रक्षितस्त्वयेति शेषः ॥ ७ ॥

---

१. 'मुक्तः'. २. '(इति पुनः पतति ।)'; '(इति मूर्च्छति ।)'. ३. 'आयुष्मन्, समाश्वसिहि' इति क्वचित्पाठः. ४. 'लालनीयेन'. ५. 'बालकेनानुवर्तिना'. ६. 'उपकारेण'. ७.'देव'. ८. 'असितोमर–'. ९. 'अपहत–'. १०. 'निश्चेष्टः'. ११. 'क्षोदैः'. १२. 'यद्येव'; 'अद्यैव'; 'यद्ययेव'; 'यच्चैव'. १३. 'अद्य'.

(निश्वस्य । नभो विलोक्य ।) ननु भो हतविधे, कृपाविरहित, भरतकुल-विमुख,

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ।

सूतः—शान्तं पापं शान्तं पापम् । महाराज, किमिदम् ।

दुर्योधनः—

घातिताशेषबन्धोर्मे किं राज्येन जयेन वा ॥ ९ ॥

(ततः प्रविशति शरप्रहारव्रणबद्धपट्टिकालङ्कृतकायः सुन्दरकः ।)

सुन्दरकः—अज्जा, अवि णाम इमस्सिं उद्देसे सारहिदुइओ दिट्ठो तुम्हेहिं महाराअदुज्जोहणो ण वेत्ति । (निरूप्य ।) कहं ण को वि मन्तेदि । होदु । एदाण बद्धपरिअराणं पुरिसाणं समूहो दीसइ । एत्थ गदुअ पुच्छिस्सम् । (परिक्रम्य विलोक्य च ।) कहं एदे क्खु सामिणो गाढप्पहारहदस्स घणसण्णाहजालदुब्भेज्जमुहेहिं कङ्कवत्तेहिं हिअआदो

---

(क) आर्याः, अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधनो न वेति । कथं न कोऽपि मन्त्रयते । भवतु । एतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते । अत्र गत्वा प्रक्ष्यामि । कथमेते खलु स्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्कपत्रैर्हृदया-

---

अपि नामेति । नाम संभावनायाम् । मृत्युरपि मे भवेन्न च वृकोदरो हन्ता भवेदिति प्रार्थनायां लिङ् ॥ ९ ॥ व्रणेषु क्षतेषु बद्धा या पट्टिका 'पाटी' इति प्रसिद्धा तयालंकृतकायः ॥ **सुन्दरकवाक्ये** । आर्याः, अद्यापि नाम कस्मिन्नुद्देशे सारथिद्वितीयो युष्माभिर्महाराजदुर्योधनो दृष्टो न हि वा । कथं वा प्रेक्ष्याधिकतरं रुदन्ति । तन्न खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा पृच्छामि । एतेषां बद्धपरिमण्डलानां पुरुषाणां समूहो दृश्यते । भवतु । अत्र गत्वा पृच्छामि । कथमेते खलु स्वामिनो गाढप्रहाराहतस्य घनसन्नाहजालदुर्ग्राह्यमुखैः कङ्कवदनैर्हृदया-

---

१. 'पातिताशेषबन्धोः' २. '(ततः प्रविशति सप्रहारः पुरुषः ।)' इति बहुपुस्तकानां पाठः. ३. 'व्रणबन्धपट्टिकालङ्कृतशरीरः'; 'व्रणबद्धपट्टिकालंकृतशरीरः'. ४. 'पुरुषः'. ५. 'महाराओ दुज्जोहणो'. ६. '(निरूप्य ।)' इति क्वचिन्नास्ति. ७. 'योहपुरिसाण'. ८. 'दीसइत्ति'. ९ '(विलोक्य ।)'. १०. 'स्वसामिणो'.

सल्लाइं उद्धरन्ति । [1]ता ण हु एदे जाणन्ति । होदु । अण्णदो विचिणइस्सम् । ([2]अग्रतोऽवलोक्य किंचित्परिक्रम्य ।) इमे क्खु अवरे प्पहूददरा [3]संगदा वीरमणुस्सा दीसन्ति । ता एत्थ गदुअ पुच्छिस्सम् । (उपगम्य ।) हंहो, जाणह [4]तुम्हे कस्सि उद्देसे कुरुणाहो वट्टइ त्ति । कहं एदे वि मं पेक्खिअ अहिअदरं रोअन्दि । (दृष्ट्वा ।) ता ण हु एदे वि जाणन्ति । [6]हा, अदिकरुणं क्खु एत्थ वट्टइ । एसा वीलमादा समलविणिहदं पुत्तअं [7]मुणिअ रत्तंसुअणिवसणाए समग्गभूसणाए वहूए सह [8]अणुमरदि । (सश्लाघम् ।) साहु वीरमादे, साहु । अण्णस्सि वि

---

च्छल्यान्युद्धरन्ति । तन्न खल्वेते जानन्ति । भवतु । अन्यतो विचेष्यामि । इमे खल्वपरे प्रभूततराः सगता वीरमनुष्या दृश्यन्ते । तदत्र गत्वा प्रक्ष्यामि । हहो, जानीथ यूय कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । कथमेतेऽपि मा प्रेक्ष्याधिकतरं रुदन्ति । तन्न खल्वेतेऽपि जानन्ति । हा, अतिकरुण खल्वत्र वर्तते । एपा वीरमाता समरविनिहत पुत्रक श्रुत्वा रक्ताशुकनिवसनया समग्रभूपणया वध्वा सहानुम्रियते । साधु वीरमातः, साधु । अन्यस्मिन्नपि

---

च्छल्यान्युद्धरन्ति । तन्न खल्वप्येते जानन्ति । भवतु । अन्यतो गत्वा पृच्छामि । अयमपरो बहुप्रहारव्रणितकायोऽकृतव्रणबन्ध एव योधसमूह इम शून्यासन तुरङ्गमसुपालभ्य रोदिति । नूनमेतेषां स्वामीह समरे हत । तन्न खल्वप्येते जानन्ति । अन्यतो गत्वा पृच्छामि । एते बहुतराः समिलिता वीरमनुष्या दृश्यन्ते । तदत्र गत्वा पृच्छामि । हहो, जानीथ यूय कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । कथमेतेऽपि मां प्रेक्ष्याधिकतर रुदन्ति । तन्न खल्वप्येते जानन्ति । हा हा, कथमेषा वीरमाता समरविनिहत पुत्र प्रेक्ष्य रक्ताशुकयुगनेपथ्यया सर्वाङ्गभूषणया वध्वा सममनुम्रियते । साधु वीरमात, साधु । आर्ये वीरमात, मा त्वमन्यस्मिन्नपि

१. 'ता क्खु एदे ण जाणन्ति' इति पाठः. २. '(अग्रतोऽवलोक्य किंचित्परिक्रम्य ।)' इति क्वचिन्नास्ति. ३. 'संगदा मणुस्सा दीसन्ति । ता एत्थ गदुअ'; 'सकलिदा वीरमाणुसा । ता एत्थ गदुअ'. ४. 'तुम्हे' इति क्वचिन्नास्ति. ५. 'देक्खिअ'. ६. 'हा, दुक्कर क्खु एत्थ वट्टइ' इति बहुपुस्तकानां पाठः. ७. 'पेक्खिदु'. ८. 'अनुसरदि'.

जम्मन्तरे अणिहदपुत्तआ हुविसस्सि[1] । होदु । अण्णदो पुच्छिस्सम्[2] । (अन्यतो विलोक्य[3] ।) अअं अवरो बहुप्पहारणिहदकाओ अकिदव्वण-[4]बन्धो एव्व जोहसमूहो इमं सुण्णासणं तुलङ्गमं उवालहिअ रोइदि । णूणं एदाणं एत्थ एव्व सामी वावादिदो । ता ण हु एदे वि जाणन्दि । होदु । अण्णदो गदुअ पुच्छिस्सम् । (सर्वतो विलोक्य ।) कहं सव्वो एव्व अवत्थाणुरूवं व्वसणं अणुभवन्तो भाअवेअविसमसीलदाए[5] पज्जाउलो जणो । ता कं दाणीं[6] एत्थ पुच्छिस्सम् । कं वा उवालहिस्सम् । होदु । सअं एव्व एत्थ विचिणइस्सम् । (परिक्रम्य ।) होदु । देव्वं दाणीं उवालहिस्सम् । हंहो देव्व, एआदसाणं अक्खोहिणीणं णाहो जेट्ठो भादुसदस्स भत्ता गङ्गेअद्दोणङ्गराअसल्लकिवकिदवम्मअस्सत्थाम-प्पमुहस्स राअचक्कस्स सअलप्पुहवीमण्डलेक्कणाहो महाराअदुज्जोहणो

---

जन्मान्तरेऽनिहतपुत्रका भविष्यसि । भवतु । अन्यतो प्रक्ष्यामि । अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणबन्ध एव योधसमूह इम शून्यासन तुरङ्गममुपालभ्य रोदिति । नूनमेतेषामत्रैव स्वामी व्यापादितः । तन्न खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा प्रक्ष्यामि । कथं सर्व एवावस्थानुरूप व्यसनमनुभवन्भागधेयविषमशीलतया पर्याकुलो जनः । तत्कमिदानीमत्र प्रक्ष्यामि । क वोपालप्स्ये । भवतु । स्वयमेवात्र विचेष्यामि । भवतु । दैवमिदानीमुपालप्स्ये । हहो दैव, एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महा-

---

जन्मान्तरे विनिहतपुत्रका भविष्यसि । हा हा, अतिकरुण खल्वत्र वर्तते । सर्व एव कालावस्थानुरूपमनुभवन्भागधेयविषमशीलतया बाष्पपर्याकुलो जनो दृश्यते । तत्कमिदानीमत्र पृच्छामि । क वोपालभे । भवतु । दैवमुपालभे । हहो दैव, एकादशानामक्षौहिणीना नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणशल्याङ्गराजकृपकृतवर्माश्वत्थामप्रमुखस्य सकलराजचक्रस्य पृथ्वीमण्डलैकनाथो महाराजदुर्योधनो-

१. 'हुविस्ससि' इत्यस्मादनन्तर 'पुत्तो वि दे अखण्डिदयसो वीरो हुविस्सदि' इति क्वचिदधिकः पाठ.. २. 'विचिणइस्सम्'. ३. 'अवलोक्य'. ४. 'अकिदव्वणप्पडिआरो'. ५. 'भागधेअविसुहदाए'. ६. 'दाणी' इति क्वचिन्नास्ति.

वि अण्णेसीअदि । [1]अण्णेसीअन्तो वि ण जाणीअदि कस्सि उद्देसे वट्टइ त्ति। [2](विचिन्त्य निश्वस्य च ।) अह वा कि एत्थ देव्वं उवालहामि । तस्स क्खु एदं णिब्भच्छिअविउरवअणवीअस्स [3]अवधीरिदपिदामहहिदोवदेसङ्कुरस्स [4]सउणिप्पोच्छाहणादिविरूढमूलस्स [5]जदुगेहजूदविससाहिणो संभूदचिरआलसंबद्धवेरालवालस्स [6]पञ्चालीकेसग्गहणकुसुमस्स फलं परिणमदि। (अन्यतो विलोक्य।) जहा एत्थ एसो विविहरअणप्पहासंवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो लूणकेदुवसो रहो दीसइ ता अहं तक्केमि अवस्सं एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वम् । [7]याव निरूपेमि । (उपगम्य दृष्ट्वा निश्वस्य च ।)

---

राजदुर्योधनोऽप्यन्विष्यते। अन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति। अथ वा किमत्र दैवमुपालभे । तस्य खल्विद निर्भर्त्सितविदुरवचनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादिविरूढमूलस्य जतुगृहद्यूतविषशाखिनः सभूतचिरकालसबद्धवैरालवालस्य पाञ्चालीकेशग्रहणकुसुमस्य फल परिणमति । यथात्रैष विविधरत्नप्रभासंवलितसूर्यकिरणप्रसूतशक्रचापसहस्रसपूरितदशदिशामुखो लूनकेतुवशो रथो दृश्यते तदह तर्कयाम्यवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । यावन्निरूपयामि ।

---

ऽन्विष्यतेऽन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुदेशे वर्तत इति। अथ वा किमिति दैवमुपालभे । यतस्तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादिरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभूतस्य चिरकालसंबद्धवैरालवालस्य पाञ्चालीकेशग्रहकुसुमस्य फल परिणमति । अम्भो, यथा चैष विविधरत्नप्रभाभास्वरसगलितसूरकिरणप्रसूतशक्रचापसहस्रपूरितदशदिङ्मुखो लूनकेतुवशो रथो दृश्यते तथा तर्कयाम्यवश्यमेतेन महाराजदुर्यो-

---

१. 'अण्णेसीअन्तो वि ण जाणीअदि । ण जाणे कस्सि उद्देसे सो वट्टइ त्ति', 'ण जाणे कस्सि उद्देसे सो वट्टइ त्ति' इति वा पाठः २. '(विचिन्त्य निश्वस्य च।)' इत्यत्र '(विमृश्य।)' इति क्वचित्पाठ ३. 'परिभूदपिदामहहिदोवदेसङ्कुरस्स'. ४. 'सउणिहदअप्पोच्छाहणादिविरूढमूलस्स'; 'सउणिप्पोच्छाहणारूढमूलस्स'. ५. 'कूडविससाहिणो' इति दशरूपके पाठः ६. 'पञ्चालिआकेसग्गहणकुसुमस्स'. ७. 'याव निरूपेमि' इत्यारभ्य 'अये, कथ सङ्ग्रामात्सुन्दरकः प्राप्तः' इत्यन्तं केषुचित्पुस्तकेषु नास्ति.

कधं एआदहाणं अक्खोहिणीणं णाअको भविअ महाराओ दुज्जोहणो पइदपुरिसो विअ असलाहणीए भूमिए उववविट्ठो चिट्ठदि। अध वा तस्स क्खु एदं पञ्चालीकेसग्गहकुसुमस्स[1] फलं परिणमदि। (क)

(उपसृत्य सूत संज्ञया पृच्छति।)

**सूतः**—(दृष्ट्वा।)[2] अये, कथं सङ्ग्रामात्सुन्दरकः प्राप्तः।

**सुन्दरकः**—(उपगम्य।) जअदु जअदु महाराओ[3]। (ख)

**दुर्योधनः**—(विलोक्य।) अये सुन्दरक, कच्चित्कुशलमङ्गराजस्य।

**सुन्दरकः**—देव, कुसलं सरीरमेत्तकेण[4]। (ग)

कथमेकादशानामक्षौहिणीनां नायको भूत्वा महाराजो दुर्योधनः प्राकृतपुरुष इवाश्लाघनीयायां भूमावुपविष्टस्तिष्ठति। अथ वा तस्य खल्विदं पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति।

(ख) जयतु जयतु महाराजः।

(ग) देव, कुशलं शरीरमात्रकेण।

धनस्य रथोद्देशेन भवितव्यम्। भवतु। उपसर्पामि। कथमेष देव एकादशानामक्षौहिणीनां नाथो महाराजदुर्योधनोऽश्लाघनीयः प्राकृतपुरुष इव भूमावुपविष्टस्तिष्ठति। नूनं तस्य खल्वेतत्पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति। अत्र परिमण्डलं मण्डली। कङ्कवदनं संदंशिका। 'रणवन्ध.' इति पाठे रणबन्धः सङ्ग्रामानुबन्धः। नेपथ्यं प्रसाधनम्। 'नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः। वध्वा पुत्रवध्वा। भागधेयं भाग्यम्। 'भागरूपनामभ्यो धेयः' इति धेयप्रत्ययः। शीलतया कालावस्थानुरूपमित्यन्वयः। विदुरो मन्त्री। पितामहो भीष्मः। आलवालं 'थलम्' इति प्रसिद्धम्। अम्मो शब्दो देशी ज्ञातार्थो हर्षार्थो वा। भास्वरः परप्रकाशकः। संगलितः संबद्धो यः सूरकिरण आदित्यतेजः। उत्तमरत्नतेजोभिरिन्द्रधनुरारभ्यत इति रत्नपरीक्षा। उद्देशः प्रदेशः। प्राकृतः पामरः॥ स्वागतं कुशलम्॥ **सुन्दरकवाक्ये**। सारथे, कुतः स्वागतं निवेदय ममागमनं देवस्य॥ जयति देवः॥ 'कच्चित्कामप्रवेदने' इत्यमरः। तेन कथयेत्यर्थः॥ **सुन्दरकवाक्ये**। देव, कुशलं स्वामिनः

---

१. 'पञ्चालिआकेसग्गहकुसुमस्स'. २. '(उपसृत्य दृष्ट्वा च।)'. ३. 'महाराओ' इत्यस्मादनन्तरं केषुचित्पुस्तकेषु 'सूतः—(विलोक्य।) आयुष्मन्, समरात्सुन्दरकः प्राप्तः' इत्यधिकः पाठः. ४. 'सरीरमेत्तेण'.

**दुर्योधनः**—किं किरीटिनास्य निहता [1]धौरेया हतः सारथिर्भग्नो वा रथः ।

**सुन्दरकः**—देव, ण भग्गो रहो । से मणोरहो । (क)

**दुर्योधनः**—[3]किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम्। [4]तदलं संभ्रमेण । अशेषतो विस्पष्टं कथ्यताम् ।

**सुन्दरकः**—जं देवो आणवेदि। देवस्स मउडमणिप्पहावेण अवणीदा मे रणप्पहारवेअणा।(इति साटोपं परिक्रम्य ।) सुणादु देवो। अत्थि दाणीं कुमाल्दुस्सासणवह—(इत्यर्धोक्ते मुखमाच्छाद्य शङ्कां नाटयति।) (ख)

**सूतः**—सुन्दरक, कथय । कथितमेव देवेन ।

**दुर्योधनः**—कथ्यताम् । श्रुतमस्माभिः ।

(क) देव, न भग्नो रथः । अस्य मनोरथः ।

(ख) यद्देव आज्ञापयति । देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना । शृणोतु देवः । अस्तीदानीं कुमारदुःशासनवध—

---

शरीरमात्रकेनैव॥ धौरेया अश्वाः। धुरं वहन्तीत्यर्थे । 'धुरो यड्ढकौ' इति ढकि धौरेय इति साधु ॥ **सुन्दरकवाक्ये** । देव, न हि रथो भग्नोऽस्यास्माकं स्वामिनो मनोरथ ॥ यद्देव आज्ञापयति। अपनीय दूरीकृत्य। **सुन्दरकवाक्ये**। दिष्ट्या महाराजस्य मुकुटमहामणिप्रभावेनापगता मे बाणव्रणवेदना। शृणोतु देव । शृणोतु सारथिश्च । अस्तीदानीं कुमारदुःशासनवध इति। श्रुतं स्वामिना दुःशासनवधं । 'अथ किं स्वीक्रियार्थकम्' इति भरतः ॥ **सुन्दरकवाक्ये**। शृणोतु देव । शृणोतु सारथिश्च ।

---

१ 'राजा—(ससंभ्रमम् ।) सुन्दरक, किं किरीटिनाऽस्य निहता धौरेयकाः'; 'राजा—किं तस्य किरीटिना हता धौरेयाः' इति पाठौ. २. 'देव, ण भग्गो रहो । से मणोरहो वि'; 'देव, ण रहो भग्गो। से मणोरहो वि', 'देव, ण भग्गो रहो। भग्गो मे मणोरहो'; 'देव, ण भग्गो रहो किं तु अह्माण सअलराअचक्कस्स मणोरहो' इति पाठान्तराणि. ३ 'दुर्योधनः—(सरोषम् ।)अरे, किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि', 'दुर्योधनः—किमविस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि'; 'राजा—किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि' इति नानाविधाः पाठाः. ४. 'तदलं संभ्रमेण। स्पष्टं कथय'; 'तदशेषतो विस्पष्टं कथ्यताम्' इति पाठौ ५. 'अए, देवस्स मउडमणिप्पहावेण', 'देवस्स मउडमणिदंसणप्पहावेण'. ६. 'मुखमावृणोति' इति पाठः.

**सुन्दरकः**—(स्वगतम् ।) कधं दुस्सासणवहो सुदो देवेण । (प्रकाशम् ।) सुणादु देवो । अज्ज दाव कुमालदुस्सासणवहामरिसिदेण सामिणा अङ्गाराएण किदकुडिलभिउडीभङ्गभीसणलेलाडवट्टेण अविण्णादसंधाणनीक्खमोक्खणिक्खित्तसरधारावरिसिणा अभिजुत्तो सो दुराआरो दुस्सासणवेरिओ मज्झमपण्डवो । (क)

**उभौ**—ततस्ततः ।

**सुन्दरकः**—तदो देव, उहअबलमिलन्तदीप्पन्तकरितुरअपदादिसमुब्भूदधूलिणिअरेण पल्लत्थगअवडासंवादेण अ वित्थरन्तेण अन्धआरेण अन्धीकिदं उहअबलम् । णं हु गगणतलं लक्खीअदि । (ख)

---

(क) कथं दुःशासनवधः श्रुतो देवेन । शृणोतु देवः । अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रुकुटीभङ्गभीषणललाटपट्टेनाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरधारावर्षिणाभियुक्तः स दुराचारो दुःशासनवैरी मध्यमपाण्डवः ।

(ख) ततो देव, उभयबलमिलद्दीप्यमानकरितुरगपदातिसमुद्भूतधूलिनिकरेण पर्यस्तगजघटासंघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम् । न खलु गगनतलं लक्ष्यते ।

---

अस्तीदानीं कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रुकुटीभङ्गभीषणेन ललाटपट्टेनाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरसंपातवर्षिणाभियुक्तोऽसौ दुराचारदुःशासनवैरी । अत्र संपात आसारः । दुराचारेत्यत्र द्वन्द्वसमासः ॥ **सुन्दरकवाक्ये** । ततो देव, उभयबलमिलद्दीप्यमानकरितुरगपदातिपदसमुद्धूतबहलधूलीनिकरेण पर्यस्तगजघटासंघातेनोत्थितेन घनान्धकारेणान्धीकृतमुभयबलम् । प्रणष्टं गगनाङ्गनम् । कुत्रापि किमपि न दृश्यते ॥ ततो देव, दूराकृष्टधनुर्गुणास्फा-

---

१ '(स्वगतम् ।) कध दुस्सासणवहो सुदो देवेण । (प्रकाशम् ।)' इति केषुचित्पुस्तकेषु नास्ति २. 'कुमाल' इति क्वचिन्नास्ति. ३ 'किद' इति क्वचिन्नास्ति. ४. 'णिडलवट्टेण'; 'णिडालवट्टेण'. ५. 'अविण्णादसंधाणमोक्खेण सिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपण्डवो भीमसेणहदओ' इति बहवः. ६. 'दीप्पन्त' इति क्वचिन्नास्ति. ७. 'णिवहेण'. ८. 'पल्लत्थतत्तद्दअगडा–'; 'पसत्थगअघडा–'. ९ 'विअ'. १०. 'ण भुवणतलं लक्खीअदि' इति पाठः.

**उभौ**—ततस्ततः ।

**सुन्दरकः**—तदो देव, दूराकड्ढिअ[1]धणुग्गुणाच्छोडणटङ्कारेण गम्भीरभीसणेण जाणीअदि गज्जिद पलअजलहरेण त्ति । (क)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो[2] देव, दोहिणं [3]वि ताणं अण्णोण्णसिहणाद-गज्जिदपिसुणं विविहपरिमुक्कप्पहरणाहदकवअसंगलिदजलणविज्जुच्छ-डाभासुरं गम्भीरत्थणिअचापजलहरं प्पसरन्तसरधारासहस्सवरिसं जादं समरदुद्दिणम् । (ख)

**दुर्योधनः**—ततस्ततः ।

(क) ततो देव, दूराकृष्टधनुर्गुणाच्छोटनटङ्कारेण गम्भीरभीषणेन ज्ञायते गर्जित प्रलयजलधरेणेति ।

(ख) ततो देव, द्वयोरपि तयोरन्योन्यसिंहनादगर्जितपिशुन विविधपरि-मुक्तप्रहरणाहतकवचसगलितज्वलनविद्युच्छटाभासुर गम्भीरस्तनितचापजलधर प्रसरच्छरधारासहस्रवर्षि जात समरदुर्दिनम् ।

लनटङ्कारेण गभीरभीषणेन नभस्तलापूरिणा ज्ञायते गर्जित प्रलयजलधरेणेति ॥ ततो देव, द्वयेषामपि तेषा (द्वयोरपि तयो )अन्योन्यसिंहनादगर्जितपिशुनाना विविधप्र-रूढप्रहरणाहतकवचसगलितज्वलनविद्युच्छटाभास्वर गम्भीरस्तनितचापजलधर प्रसरच्छरधारासहस्रवार्षि जात तत्समरदुर्दिनम् । अत्र पर्यस्त इतस्ततो गत । आ-स्फालनेन यष्टङ्कारस्तेन । सिंहनाद एव गर्जित तस्य पिशुनानां सूचकानाम् । 'पिशुनौ खलसूचकौ' इत्यमर । प्ररूढमुपचितम् । कवच सन्नाह । स्तनित गर्जितम् । 'धारास-पात आसार ' इत्यमर. । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमर ॥ **सुन्दरकवाक्ये ।** ततो देव, एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातु परिभवशङ्किना धनजयेन वज्र-निर्घातोद्घोषविषमरसितध्वजयष्टित (?) महावानररतुरङ्गमसवाहनाव्याकुलवासुदेव-

१. 'धणुग्गुणच्छोटणटकारगम्भीरभीसणेण अन्धआरेण जाणीअदि'; 'धणुग्गुण-च्छोडणटकारगम्भीरभीसणेण भअआरिणा अन्धआरेण जाणीअदि' इति पाठौ. २. 'तदो अ देव'. ३. 'वि' इति क्वचिन्नास्ति. ४. 'सजलिदजलणविज्जुअ बहललुहिलबिन्दु-खज्जोअभासुर गम्भीरत्थणिअचापजलहरप्पसरिदसरधारासहस्सवरिसदुद्दसण सभूदं समरदुद्दिणम्' इति बहुपुस्तकाना पाठ., 'सजलिदजलणविज्जुअ' इत्यत्र 'सजलिद-जलणविज्जुछअ' इत्यपि क्वचित्पाठो दृश्यते.

**सुन्दरकः**—[1]तदो देव, एदस्सि अन्तरे जेट्ठस्स भादुणो [2]परिभवसङ्किणा धणंजएण [3]वज्जणिग्घादणिग्घोसविसमरसिदधअअग्गट्ठिदमहावाणरो [4]तुरङ्गमसंवाहणवापिदवासुदेवसं[5]ङ्खचक्कासिगदालञ्छिदच्चउब्बाहुदण्डो आपूरिअपञ्चजण्णदेअदत्ततारसिदप्पडिरवभरिददसदिसासुहकुहरो धाविदो तं उद्देसं [6]रहवरो । (क)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो भीमसेणधणंजएहि अभिजुत्तं पिदरं पेक्खिअ ससंभमं विअलिअं अवधूणिअ रअणसीसअं आकण्णाकड्ढिदकठिण[7]कोदण्डजीओ [8]दाहिणहत्तुक्खित्तसरपुङ्खविवट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालविससेणो । (ख)

(क) ततो देव, एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः परिभवशङ्किना धनजयेन वज्रनिर्घातनिर्घोषविषमरसितध्वजाग्रस्थितमहावानरस्तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रासिगदालाञ्छितचतुर्बाहुदण्ड आपूरितपाञ्चजन्यदेवदत्ततार-रसितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देश रथवरः ।

(ख) ततो भीमसेनधनजयाभ्यामभियुक्त पितर प्रेक्ष्य ससभ्रम विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवो दक्षिणहस्तोत्क्षिप्तशरपुङ्खविवट्टनत्वरायितसारथिकस्त देशमुपगतः कुमारवृषसेनः ।

शङ्खचक्रासिगदालाञ्छितचतुर्बाहुदण्ड आपूरितपाञ्चजन्यदेवदत्ततारसितप्रतिरवोद्भरितदशदिङ्मुखकुहर' प्रापितस्तमेवोद्देश धनजयस्यैव रथवर. । अत्र वज्रस्य निर्घातवद्य उद्घोष उच्च शब्दस्तद्वद्विषम रसित यस्य स तथा । 'शङ्खो लक्ष्मीपतेः पाञ्चजन्य' इत्यमर । देवदत्तोऽर्जुनशङ्ख । तार उच्च । भरितेति तारकादित्वादितच् ॥ **सुन्दरकवाक्ये** । ततो देव, भीमसेनधनजयाभ्यामभियुक्त पितर प्रेक्ष्य ससभ्रमासुक्तविगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवो दक्षिणहस्तनिक्षिप्तशरपुङ्खविघट्टनात्वरितसारथिस्तमेवोद्देशमुपगत कुमारवृषसेन ।

१. 'तदो अ देव'. २. 'पराभवसङ्किणा'. ३. 'वज्जणिग्घादणिग्पोसो विसमरसिदहरसिदहओ सिहरट्ठिदवाणरो', 'वज्जणिग्घादणिग्घोसविसमरसिदरहसिदहओ सिहरट्ठिदवाणरो', 'वज्जणिग्घादणिग्घोसविसमरहरसिदहओ सिहरट्ठिदवाणरो' इति नानाविधः पाठ ४ 'तुरङ्गमधारणवावारिद–'. ५. 'सङ्खचक्कगदासिलञ्छिदचडुलचउब्बाहुदण्डदुद्दसणो' इति बहुपुस्तकाना पाठः. ६. 'रहो' ७. 'कोदण्डमण्डलो'. ८. 'दाहिणहत्थविक्खित्तसरपुङ्खबन्धणो विघट्टणतुवराइदसारहीओ' इत्यपरः पाठः.

**दुर्योधनः**—(सावष्टम्भम्।) ततस्ततः।

**सुन्दरकः**—तदो अ देव, तेण आअच्छन्तेण एव्व कुमालविससेणेण [1]विदलिदामिलदामामलमिणिद्धपुङ्खेहि कठिणकङ्कवत्तेहि किसणवण्णेहि [2]माणसिलाणिसिदमामलमल्लवन्धेहि कुसुमिदो विअ तरू मुहुत्तएण सिलीमुहेहि पच्छादिदो धणजअस्स रहवरो। (क)

**उभौ**—(सहर्षम।) ततस्तत।

**सुन्दरकः**—तदो देव, तीक्खविक्खित्तणिसिदभल्लवाणवरिसिणा धणंजएण ईसि विहसिअ भणिदम्—'अरे रे विससेणे, पिदुणो वि दाव दे ण जुतं मह [3]कुविदस्स अभिमुहं ठादुम्। कि उण भवदो बालस्स। ता गच्छ। अवरेहि कुमारेहि [4]सह गदुअ आओधेहि।'

(क) ततश्च देव, तेनागच्छतैव कुमारवृषसेनेन विदलितासिलताश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शाणशिलानिशितश्यामलशल्यबन्धैः कुसुमित इव तरुर्मुहूर्तेन शिलीमुखैः प्रच्छादितो धनजयस्य रथवरः।

(ख) ततो देव, तीक्ष्णविक्षिप्तनिशितभल्लबाणवर्षिणा धनजयेनेषद्विहस्य भणितम्—'अरे रे वृषसेन, पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम्। कि पुनर्भवतो बालस्य। तद्गच्छ। अपरैः कुमारैः सह गत्वायुध्यस्व।'

अत्रामुक्त. परिहित.। शीर्षक 'टोप्पर' इति ख्यातम्। 'शीर्षकम्। शीर्षण्य च शिरस्त्रे' इत्यमर.।जीवा पतञ्चिका॥ **सुन्दरकवाक्ये**। ततो देव, स्वागतेनैव कुमारवृषसेनेन महदाश्चर्यं कृतम्। वैडूर्यशिलाश्यामलसुस्निग्धशल्यबन्धै. कठिनकङ्कपक्षकृष्णाननै शिलानिशितमासलोज्ज्वलैर्यथा कुसुमितस्तरुवर शिलीमुखैस्तथा प्रच्छादितो धनजयस्य रथवर। अत्र वैडूर्यशिला मणिविशेषः। शल्यबन्धो बाणभेद.। कङ्क 'कङ्कारी' इति प्रसिद्ध पक्षी। शिलाया यन्निशित निघर्षण तेन मासलैः स्निग्धैरत एवोज्ज्वलितै.। 'शिलीमुखौ बाणभृङ्गौ' इत्यमर.॥ **सुन्दरकवाक्ये**। ततो देव, तीक्ष्णमोक्षनिक्षिप्तनिशितशरसपाताभिघातजातमन्युना धनजयेनेषद्विहस्य भणितम्—'अरे रे वृषसेन, पितुरपि तावन्न ते युक्त मम परिकुपितस्य पुरत. स्थातुम्। कि पुनर्भवतो बालकस्य। तद्गच्छ रे, गच्छ। अपरैः

१. 'विदलिदसिहामामल–'. २ 'सिलाणिसिद–'. ३. 'कुविदस्स' इति क्वचिन्नास्ति. ४. 'सह गदुअ' इति क्वचिन्नास्ति.

एव्वं वाअं णिमम्मिअ गुरुअणाहिक्खेवेण उद्दीविअकोवो-परत्तमुहमण्डलविअम्भिअभिउडीभङ्गभीमणेण चावधारिणा कुमाल-विससेणेण मम्मभेदएहिं परुसविसमेहिं सुदिवहकिदप्पणएहिं णिब्भ-च्छिदो गण्डीवी बाणेहिं ण उण दुट्ठवअणेहिं। (ख)

**दुर्योधनः**—साधु वृषसेन, साधु। सुन्दरक, ततस्ततः।

**सुन्दरकः**—तदो देव, णिसिदसराभिघादवेअणोपजादमण्णुणा किरीटिणा चण्डगण्डीवजीआसद्दणिज्जिदवज्जणिग्घादघोसेण बाण-णिपडणपडिसिद्धदसणप्पसरेण पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरीअम्। (क)

**दुर्योधनः**—(साकूतम्।) ततस्ततः।

---

एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भित-भ्रुकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेन मर्मभेदकैः परुषविषमैः सुदिवसकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनैः।

(क) ततो देव, निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्ड-गाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम्।

---

कुमारकै सह गत्वायोधय' इति। एवं च निशम्य गुरुवचनाधिक्षेपजनितकोपोपरक्त-मुखमण्डलभ्रुकुटीविजृम्भितनेपथ्यधारिणा कुमारवृषसेनेन मर्मभेदकैः सुतवधकृत-प्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनैः। अत्र विजृम्भितं कृतम्। सुतवधे-ऽर्जुनसुतस्याभिमन्योर्वधे। निर्भर्त्सितो धर्षितः॥ **सुन्दरकवाक्ये**। ततो देव, नि-शितशराभिघातजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दविनिर्जितवज्र-निर्घातघोषेणाविज्ञातबाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम्। अत्र प्रस्तुतं कृतम्। शिक्षाऽस्त्राभ्यासः॥ **सुन्दरकवाक्ये**। ततो देव, तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गु-णगमनागमनशरसंधानतीक्ष्णमोक्षचटुलकरतलेन कुमारवृषसेनेन सविशेषं प्रस्तुतः समरकर्मान्तः। अत्राविभावितोऽप्रकाशितः। तूणीरः 'तोन' इति ख्यातम्।

---

१. 'कुमालविससेणेण वि'. २. 'सुढवहकिदप्पणएहिं', 'सुदिपधकिदप्पणएहिं' इति पाठौ. ३. 'दुव्वअणेहिं'. ४. 'सुन्दरक' इति क्वचिन्नास्ति. ५ 'तदो अ देव'. ६. 'सिदसराभिघाद—'. ७. 'गण्डीविणा'.

**सुन्दरकः**—तदो[1] देव, तं[2] तारिसं पेक्खिअ सत्तुणो समरव्वावार-चउरत्तणं अविभाविअतूणीर[3]मुहधणुग्गुणगमणागमणसरसंधाणमोक्ख-चडुलकरअलेण कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म । (क)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो देव, एत्थन्तरे विमुक्कसमरव्वावारो मुहुत्तवि-स्सामिदवेराणुबन्धो[5] दोणं वि कुरुराअपण्डवबलाणं[6] 'साहु कुमालविस-सेण, साहु' त्ति किदकलअलो वीरलोओ अवलोइदु पउत्तो । (ख)

**दुर्योधनः**—(सविस्मयम् ।) ततस्ततः ।

---

(क) ततो देव, तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभावित-तूणीरमुखधनुर्गुणगमनागमनशरसंधानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म ।

(ख) ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रामितवैरानु-बन्धो द्वयोरपि कुरुराजपाण्डवबलयोः 'साधु कुमारवृषसेन, साधु' इति कृतकल-कलो वीरलोकोऽवलोकयितुं प्रवृत्तः ।

चटुलं मनोज्ञं कुशलं वा । प्रस्तुतम् आरब्धम् । आरम्भः उपक्रमः । 'समरकर्मान्तः' इति पाठे समर एव कर्मान्तः 'कीमत' इति प्रसिद्धः ॥ **सुन्दरकवाक्ये** । ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रामितवैरानुबन्धो द्वयोरपि तयोः कुरुपाण्डवराजबलयोः 'साधु कुमारवृषसेन, साधु' इति कृतकलकलो वीरलोकोऽव-

---

१. 'तदो अ देव'. २. 'त पेक्खिअ तस्स सत्तुणो समरव्वावारचउरत्तण'; 'त अ तारिस समरव्वावारचउरत्तण पेक्खिअ' इति पाठौ. ३. 'तूणी-मुहधणुग्गुणगमणासणसधाणमोक्खचडुलकरअलेण', 'तूणीमुहधणुग्गुणगमणासणसर-सधाणचडुलकरअलेण'; 'तूणीरमुहधणुग्गुणगमणागमणसधाणमोक्खचडुलकरअलेण'; 'तूणीमुहधणुग्गुणगमणागमणबाणसधाणमोक्खचडुलकरअलेण' इति पाठान्तराणि. ४. 'तदो अ देव, परिसेसिदरणव्वावारेसु विमुक्कचिरणिवद्धिअवेराणुबन्धेसु कुरुराअपण्डवबलेसु साहु विससेण, साहु त्ति कलअलमुहरो वीरलोओ आलो-इदु पउत्तो'; 'तदो अ देव, परिसेसिदरणव्वावारो विमुक्कचिरणिव्वद्धिअवेराणुबन्धो दोण वि कुरुराअपण्डवबलेसु साहु विससेण, साहु त्ति कलअलमुहरो वीरलोओ आलोइदु पउत्तो' इति पाठौ. ५. 'सुपरिच्चत्तचिरआलसवड्ढिदवेराणुबन्धो' इति पाठः. ६. 'कुरुपण्डवाण हि'.

**सुन्दरकः**—तदो अ देव, [1]अवहीरिदसअलराअधाणुक्कचक्कपराक्कमसालिणो सुदस्स तहाविहेण समरकम्मालम्भेण [2]हरिसरोसकरुणासंकडे [3]वट्टमाणस्स सामिणो अङ्गराअस्स णिवडिआ सरपद्धइ भीमसेणे [4]बाप्पपज्जाउला दिट्ठी कुमालविससेणे। (क)

**दुर्योधनः**—(सभयम्।) ततस्ततः।

**सुन्दरकः**—तदो अ देव, उभअबलप्पउत्त[5]साहुकारामरिसिदेण गण्डीविणा तुरगेसु सारहि पि रहवरे धणुं पि जीआइं पि णलिन्दलञ्छणे [6]सिदादवत्ते अ व्वावारिदो समं सिलीमुहासारो। (ख)

**दुर्योधनः**—(सभयम्।) ततस्ततः।

---

(क) ततश्च देव, अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने।

(ख) ततश्च देव, उभयबलप्रवृत्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रे च व्यापारितः समं शिलीमुखासारः।

---

लोकितु प्रवृत्त। अत्र विश्रामित उपशान्त.॥ **सुन्दरकवाक्ये**। ततो देव, अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिन सुतस्य तथाविधसमरकर्मारम्भेन हर्षरोषकरुणसकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टि. कुमारवृषसेने। अत्र धानुष्को धनुर्धर। धनु. प्रहरणमस्येत्यर्थे 'प्राग्वहतेष्ठक्' इति ठक्प्रत्यय। सुतविक्रमदर्शनेन हर्ष। शत्रुदर्शनेन रोष.। बालस्य महाबलेन युद्धात्करुणमिति रसत्रयमत्र। पद्धति पङ्क्ति॥ **सुन्दरकवाक्ये**। ततो देव, उभयबलविमुक्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथौ रथवरे धनुषि जीवायां नरेन्द्रकुललाञ्छने सितातपत्रे समं व्यापारित शिलीमुखासार। अत्र लाञ्छने चिह्ने। सितातपत्रे श्वेतच्छत्रे। सममेकदैव॥ **सुन्दरकवाक्ये**। ततो

---

१. 'अवहीरिदसअलधाणुक्कचक्क–'. २. 'करुणहरिसरोससंकडे'; 'हरिसरोसकरुणासङ्कासकडे'. ३ 'अणुवट्टमाणस्स'. ४. 'बाप्पआउला'. ५. 'साहुकारामरिसिदेण सरवरिसपज्जलिदेण गण्डीविणा' इति बहव. ६. 'सिदादवत्ते व्वावारिदा सम सिलीमुहा' इत्यपरः पाठः.

**सुन्दरकः**—तदो देव, विरहो [1]लूणगुणकोदण्डो परिब्भमणमेत्तव्वावारो मण्डलग्गेण विअरिदुं पउत्तो कुमालविससेणो । (क)

[2]**दुर्योधनः**—(साशङ्कम् ।) ततस्ततः ।

**सुन्दरकः**—तदो देव, सुदरहविद्धंसणा[3]मरिसिदेण सामिणा अङ्गराएण अगणिअभीमसेणाभिजोएण [4]पडिमुक्को धणंजअस्स उवरि सिलीमुहासारो । [5]कुमालो वि परिजणोवणीदं अण्णं रहं आरुहिअ पुणो वि पउत्तो [6]धणजएण सह आओधेदुम् । (ख)

[7]**उभौ**—साधु वृषसेन, साधु । ततस्तत. ।

---

(क) ततो देव, विरथो लूनगुणकोदण्डः परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितु प्रवृत्तः कुमारवृषसेनः ।

(ख) ततो देव, सुतरथविध्वसनामर्षितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनजयस्योपरि शिलीमुखासारः । कुमारोऽपि परिजनोपनीतमन्य रथमारुह्य पुनरपि प्रवृत्तो धनजयेन सहायोधितुम् ।

---

देव, अत्रान्तरे विरथ कुमारवृषसेनो लूनगुणकोदण्ड. परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितु प्रवृत्त । अत्र मण्डलाग्रेण खड्गेन। सहार्थे तृतीया । 'कौक्षेयको मण्डलाग्र' करवाल कृपाणवत्' इत्यमर ॥ **सुन्दरकवाक्ये** । ततो देव, स्वामिना सुतरथविध्वसनामर्षितेनागणितभीमसेनाभियोगेन परिमुक्तो धनजयस्योपरि शिलीमुखासार । कुमारोऽपि परिजनोपनीतमन्य रथमारुह्य पुनरपि प्रवृत्तो धनजयेन सहायोधितुम् । अत्रायोधितु युद्ध कर्तुम् ॥ **सुन्दरकवाक्ये** । ततो देव, भणित च कुमारवृषसेनेन—'अरे रे ताताधिक्षेपकारक मुखरमध्यमपाण्डव,

---

१. 'लूणगुणकोदण्डमेत्तपरिब्भमणव्वावारप्पडिसिद्धसरसपादो मण्डलेहि विअरिदु पउत्तो कुमालो', 'लूणगुणकोदण्डो परिब्भमणमेत्तव्वावारप्पडिसिद्धसरसपादो मण्डलाई विरइदु पउत्तो कुमालो', 'लूणगुणकोदण्डो परिब्भमणव्वावारमेत्तप्पडिसिद्धसरसपादो मण्डलाइ विरचइदु पउत्तो कुमालो' इति पाठान्तराणि. २. 'दुर्योधन.—अहो, बालस्य पराक्रमो मूढता च। उभौ—ततस्तत.' इति क्वचित्पाठः. ३. 'विद्धसणामरिसुद्दीविदेण'. ४. 'पङ्घत्थो'. ५. 'कुमालविससेणो'. ६. 'धणजआभिजोए'. ७. 'उभौ—साधु वृषसेन' इत्यस्मादारभ्य 'सुन्दरकः—तदो देव' इत्यन्त बहुषु पुस्तकेषु नास्ति.

**सुन्दरकः**—तदो देव, भणिदं च कुमालेण—'रे रे तादाहि-क्खेवमुहल मज्झमपण्डव, मह सरा तुह सरीरं [1]उज्झिअ अण्णस्मिं ण णिवडन्ति' त्ति [2]भणिअ सरसहस्सेहि पण्डवसरीरं पच्छादिअ सिंहणादेण गज्जिदु पउत्तो। (क)

**दुर्योधनः**—(सविस्मयम्।) अहो, बालस्य पराक्रमो [3]मुग्धस्वभावेऽपि। ततस्ततः।

**सुन्दरकः**—तदो अ देव, [4]तं सरसंपादं समवधूणिअ [5]णिसिदसरा-भिवादजादमण्णुणा किरीटिणा गहिदा रहुच्छङ्गादो कणन्तकणअ-किङ्किणीजालझङ्कारविराइणी मेहोवरोहविमुक्कणहत्थलणिम्मला णि-सिदसामलसिणिद्धमुही विविहरअणप्पहाभासुरभीसणरमणिज्जदंसणा [6]सत्ती विमुक्का कुमालाहिमुही। (ख)

(क) ततो देव, भणित च कुमारेण—'रे रे ताताधिक्षेपमुखर मध्यम-पाण्डव, मम शरास्तव शरीरमुज्झित्वान्यस्मिन्न निपतन्ति' इति भणित्वा शरसहस्रैः पाण्डवशरीर प्रच्छाद्य सिंहनादेन गर्जितु प्रवृत्तः।

(ख) ततश्च देव, तं शरसपात समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनककिङ्किणीजालझङ्कारविराविणी मेघो-परोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुर-भीषणरमणीयदर्शना शक्तिर्विमुक्ता कुमाराभिमुखी।

न मम शरासारास्तव शरीरमुज्झित्वान्यस्मिन्निपतन्ति' इति भणित्वा शरशतस-हस्रैः पाण्डवशरीर प्रच्छाद्य सिंहनाद विचरितु प्रवृत्तम्। अत्र प्रच्छाद्य व्याप्य। वि-चरितुं कर्तुम्। प्रवृत्त वृषसेनेनेति शेष॥ **सुन्दरकवाक्ये**। ततो देव, त शरसपात समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनक-किङ्किणीजालहुङ्काररराविणी महामेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामल-स्निग्धमुखी विविधरत्नप्रभाघटितशीर्षभीषणरमणीयदर्शना महाशक्तिर्विमुक्ता

१. 'वज्जिअ' २. 'भणन्तेण सरसहस्सेहि पण्डवसरीर पच्छादिद कुमालेण।' इति क्वचित्पाठ. ३. 'मुग्धस्वभावस्यापि', 'मुग्धस्वभावोऽपि'. ४. 'तस्स सरसहस्स-सपादं समवधूणिअ'; 'तस्स सरसहस्ससपाद अवधुणिअ'. ५. 'णिसिदसराभिघाद-जादमण्णुणा' इति क्वचिन्नास्ति ६. 'सत्ती सोवहास विमुक्का अ धणजएण कुमा-लाहिमुहम्' इति बहुपुस्तकाना पाठः.

**दुर्योधनः**—(सविषादम् ।) अहह । ततस्ततः ।

**सुन्दरकः**—तदो देव, पज्जलन्तीं सत्ति पेक्खिअ विअलिअं अङ्गराअस्स हत्थादो समर धणु हिअआदो वीरसुलहो उच्छाहो णअणादो वाप्पसलिलं पि । रसिदं अ सिहणादं विओदलेण । दुक्करं दुक्करं त्ति आक्कन्दिदं कुरुबलेण । (क)

**दुर्योधनः**—(सविषादम् ।) ततस्ततः ।

**सुन्दरकः**—तदो देव, कुमालविससेणेण आकण्णपूरिदेहि णिसिदखुरप्पबाणेहि चिरं णिज्झाइअ अद्धपहे एव्व भाइरही विअ आअच्छन्ती जधा भअवदा विसमलोअणेण तधा तिधा किदा सत्ती । (ख)

**दुर्योधनः**—साधु वृषसेन, साधु । ततस्ततः ।

(क) ततो देव, प्रज्वलन्ती शक्ति प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशर धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्वाष्पसलिलमपि । रसित च सिहनाद वृकोदरेण । दुष्कर दुष्करमित्याक्रन्दित कुरुबलेन ।

(ख) ततो देव, कुमारवृषसेनेनाकर्णपूरितैर्निशितक्षुरप्रबाणैश्चिरं निर्धार्यार्धपथ एव भागीरथीवागच्छन्ती यथा भगवता विषमलोचनेन तथा त्रिधा कृता शक्तिः ।

कुमाराभिमुखी । अत्र क्वणच्छब्दायमानम् । भीषणता विचित्ररूपतया । रमणीयता स्वभावादेव॥**सुन्दरकवाक्ये**। ततो देव, ता तादृशी प्रज्वलन्ती शक्ति प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशर धनुर्हृदयाद्वीरसुलभोत्साहो नयनाद्वाष्पसलिल च। रसित च सिहनाद वृकोदरेण। दु कर दु करमिति कृत्वाक्रन्दित कुरुबलेन । अत्र रसित शब्दितम्। सिहस्येव नाद यथा स्यात्तथा॥ **सुन्दरकवाक्ये**। ततो देव, कुमारेणाकर्णपूरितैर्निशितक्षुरप्रबाणैर्दूर निर्ध्यात्वार्धपथ एवागच्छन्ती भागीरथी भगवता विषमलोचनेनेव त्रिधा कृता शक्ति । अत्र निर्ध्यात्वा विचिन्त्य । भागीरथी गङ्गा । विषमलोचनेन हरेण । गङ्गापि हरेण त्रिपथगा कृतेति भाव ॥**सुन्द-**

१. 'दुर्योधन.—(सविषादम् ।) अहह', 'दुर्योधन.—(सविषादम् ।) ततस्तत.', इति पाठौ २. 'सबाण'. ३. 'णअणादो बाप्पसलिल वअणादो रसिदम् । हसिद अ धणजएण सिहणाद विणादिद विओदलेण अ' इति बहुपुस्तकाना पाठः. ४. 'आकण्णाकिट्ठणिसिदखुरप्पेण सुचिर णिज्झाइअ अद्धपहे एव्व भाइरही विअ भअवदा विसमलोअणेण तिधा किदा सत्ती' इति बहुपुस्तकाना पाठः.

**सुन्दरकः**—तदो अ देव, एदस्सि अन्तरे [1]कलमुहरेण वीरलोअसाहुवादेण अन्तरिदो [2]समरतूरणिग्घोसो । सिद्धचालणगण-[3]विमुक्ककुसुमप्पअरेण पच्छादिदं समलाङ्गणम्[4] । भणिअं अ सामिणा अङ्गराएण—'भो वीर विकोदल, असमत्तो तुह मह वि समल-व्वावारो । ता [5]अणुमण्ण म मुहुत्तअम् । पेक्खामहे [6]दाव वस्सस्स तुह भादुणो अ धणुव्वेदसिक्खाचउरत्तणम् । [7]तुह वि एदं पेक्ख णिज्जम्' त्ति । (क)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो देव, विरसमिदाओधनव्वावारा मुहुत्तविस्समिद-णिअवेराणुबन्धा दुवे वि पेक्खआ जादा भीमसेणाङ्गराआ । (ख)

---

(क) ततश्च देव, एतस्मिन्नन्तरे कलमुखरेण वीरलोकसाधुवादेनान्त-रितः समरतूर्यनिर्घोषः । सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादित समराङ्गणम् । भणितं च स्वामिनाङ्गराजेन—'भो वीर वृकोदर, असमाप्त-स्तव ममापि समरव्यापारः । तदनुमन्यस्व मां मुहूर्तम् । प्रेक्षावहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम्' इति ।

(ख) ततो देव, विश्रमितायोधनव्यापारौ मुहूर्तविश्रमितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ ।

---

रकवाक्ये । ततो देव, एतस्मिन्नन्तरे कलमुखरेण वीरसाधुवादेनान्तरित समर-तूर्यनिर्घोष । सिद्धचारणगणप्रमुक्तकुसुमप्रकरेण संच्छादित समराङ्गणम् । भ-णितं च स्वामिनाङ्गराजेन—'भो वीर वृकोदर, असमाप्त एव तव मम समरव्या-पार । तदनुमन्यस्व क्षणमात्रमेव । प्रेक्षावस्तावत्तव भ्रात्रा सम मम पुत्रस्य धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम्' इति ॥ सुन्दरकवाक्ये । ततो देव,

---

१. 'किदकलकलमुहरेण'. २. 'समरतूरग्वो'. ३ 'विमुक्केण कुसुमप्पअरेण'. ४. 'समलाङ्गणम्' इत्यस्मादनन्तरं बहुषु पुस्तकेषु 'दुर्योधनः—अहो, बालस्य पराक्रमः। ततस्ततः । सुन्दरक —तदो अ देव, भणिअ सामिणा अङ्गराएण, भो विकोदल' इति पाठो वर्तते. ५. 'अणुमण्णदु'. ६ 'दाव क्खणमेत्त वस्सस्स तुह भादुणो धणुव्वेदसि-क्खाणिउणत्तणम्' इति पाठ.. ७. 'तुह वि एद पेक्खणिज्ज त्ति । तदो विरदाओ रणव्वावारणिब्बन्धादो मुहुत्तअ प्पसमिदवेरा जादा दुवे वि अ पेक्खआ भीमसेणाङ्ग-राआ'; 'तुह वि एदं पेक्खणिज्ज त्ति । तदो विरमिदरणव्वावारा मुहुत्तविस्सामिदनि-अवेरा जादा मुहुत्त दुवे पेक्खआ भीमसेणाङ्गराआ' इति पाठौ.

**दुर्योधनः**—(सामिप्रायम् ।) ततस्ततः ।

**सुन्दरकः**—तदो अ देव, सत्तिखण्डणामरिसिदेण गण्डीविणा भणिअम्—'अरे रे दुज्जोहणप्पमुहा—(इत्यर्धोक्ते लज्जां नाटयति ।) (क)

**दुर्योधनः**—सुन्दरक, कथ्यताम् । परवचनमेतत् ।

**सुन्दरकः**—सुणादु देवो । 'अरे दुज्जोहणप्पमुहा कुरुबलसेणापहुणो, अविणअणोकण्णधार कण्ण, तुम्हेहि मह परोक्खं बहुहिं महारहेहि पडिवारिअ एआइ मम पुत्तओ अहिमण्णु व्वावादिदो । अहं उण तुम्हाणं पेक्खन्ताणं एव्व एद कुमालविससेणं सुमरिदव्वसेसं करोमि' त्ति भणिअ सगव्वं आप्फालिदं णेण वज्जणिग्घादघोसभीसणजीआरवं गण्डीवम् । सामिणा वि सज्जीकिदं कालपुट्ठम् । (ख)

(क) ततश्च देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—'अरे रे दुर्योधनप्रमुखाः—

(ख) शृणोतु देवः । 'अरे, दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः, अविनयनौकर्णधार कर्ण, युष्माभिर्मम परोक्ष बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः । अह पुनर्युष्माक प्रेक्षमाणानामेवैतं कुमारवृषसेन स्मर्तव्यशेष करोमि ' इति भणित्वा सगर्वमास्फालितमनेन वज्रनिर्घातघोषभीषणजीवारवं गाण्डीवम् । स्वामिनापि सज्जीकृत कालपृष्ठम् ।

विश्रमितायोधनव्यापारौ मुहूर्तविश्रामितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ । अत्र विश्रमित उपशान्त. । प्रेक्षको द्रष्टा ॥ **सुन्दरकवाक्ये** । ततो देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—'अरे रे दुर्योधनप्रमुखाः कुरुयोधा, अविनयनौकर्णधार कर्ण, युष्माभिर्बहुभिर्महारथैर्मिलित्वा मया शून्ये मम पुत्रोऽभिमन्युर्बाल एकाकी व्यापादित । अह पुनर्युष्माक प्रेक्षकानामेवैत कुमार वृषसेन स्मर्तव्यशेष करोमि । तद्ध्रियतां ध्रियताम्' इत्यास्फालित तेन वज्रनिर्घातोद्घोषगम्भीरभीषणजीवारव गाण्डीवम् । स्वामिनापि सज्जीकृत काल-

१. '(साभिप्रायम् ।)' इति क्वचिन्नास्ति. २ 'तदो अ देव, एदस्सि अन्तरे सत्तिखण्डणामरिसिदेण गण्डीविणा एव्व भणिअम्' इति पाठः. ३. 'मय'. ४. 'परवचनमत्र को दोषः' इति पाठः. ५ 'अरे अविणअणईकण्णधार कण्ण' इति पाठ. ६. 'मह परोक्ख एआइ पुत्तओ अहिमण्णु व्वावादिदो' इति पाठः. ७ 'एव्व' इति क्वचिन्नास्ति. ८. 'सुमरिदव्वमेत्तसेस'. ९. 'णिग्घादघोसभीसणजीआरव'.

**दुर्योधनः**—(सवाहित्थम्।)[1] ततस्ततः।

**सुन्दरकः**—तदो[2] अ देव, पडिसिद्धभीमसेणसमलकम्मालम्भेण गण्डीविणा विरइदा अङ्गराअविसमेणरहकूलकसाओ दुवे बाणणदीओ। तेहि वि दुवेहि अण्णोण्णदंसिदसिक्खाविसेसेहि[3] अभिजुत्तो सो[4] दुराआरो मज्झमपण्डवो। (क)

**दुर्योधनः**—ततस्ततः।

**सुन्दरकः**—तदो अ देव, गण्डीविणा[5] ताररसिदज्जीआणिग्घोसमेत्तविण्णादबाणवरिसेण तह आअरिदं पत्तिहि जह ण णहत्तलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुवंसो ण बलाइं ण सारही ण तुलङ्गमा[6] ण दिसाओ ण वीरलोओ अ लक्खीअदि[7]। (ख)

(क) ततश्च देव, प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचितेऽङ्गराजवृषसेनरथकूलकषे द्वे बाणनद्यौ। ताभ्यामपि द्वाभ्यामन्योन्यदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारो मध्यमपाण्डवः।

(ख) ततश्च देव, गाण्डीविना ताररसितज्यानिर्घोषमात्रविज्ञातबाणवर्षेण तथाचरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न बलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते।

धृष्टम्। अत्राविनय एव नौरिति रूपकम्। प्रेक्षकाणामित्यनादरे षष्ठी। तेन भवतः प्रेक्षकाननादृत्येत्यर्थः। स्मर्तव्यं स्मरणार्हं शेषोऽवसानं यस्य तम्। तथा च स्मरणमात्रावशिष्टमित्यर्थः॥ **सुन्दरकवाक्ये**। ततो देव, प्रतिषिद्धभीमसेनसमरकर्मारम्भेन गाण्डीविना विरचितेऽङ्गराजवृषसेनरथकूलकषे द्वे बाणनद्यौ। ताभ्यां द्वाभ्यामप्यन्योन्यदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारमध्यमपाण्डवः। अत्र कूलं कषतीत्यर्थे 'सर्वकूलाभ्रकरीषेषु कषः' इति खच्प्रत्ययः। 'खित्यनव्ययस्य' इति मुम्॥ **सुन्दरकवाक्ये**। ततो देव, गाण्डीवताररसितमांसलनिर्घोषेणाविज्ञातबाणवर्षेण तथाचरितं पार्थेन यथा न नभस्तलं न दिशो न धरणी न स्वामी न तेषां रथा न सारथिर्न कुमारो न खलु किमपि लक्ष्यते॥

१. '(सावहित्थम्।)' इति क्वचिन्नास्ति. २. 'तदो अ देव, एदस्सि अन्तरे पडिसिद्धभीमसेणसमलकम्मालम्भेण' इति पाठः. ३ 'अण्णोण्णसिणेहदसिद–'. ४. 'सो दुराआरो' इति क्वचिन्नास्ति. ५ 'गण्डीवताररसिदमगलगोधाणिग्घोसदुव्विण्णादबाणवरिसेण' इति पाठः. ६. 'तुलङ्गमो'. ७. 'संलक्खीअदि'.

**दुर्योधनः**—(सविस्मयम् ।) ततस्ततः ।

**सुन्दरकः**—[1]तदो अ देव, अदिक्कन्ते सरवरिसे क्खणमेत्तं ससिहणादे पण्डवबले विमुक्काक्कन्दे कोरवबले उत्थिदो महन्तो कलअलो [2]हा हदो कुमालविससेणो हा हदो त्ति । (क)

**दुर्योधनः**—([3]सबाष्परोधम् ।) ततस्ततः ।

**सुन्दरकः**—[4]तदो देव, महन्तीए वेलाए पेक्खिअ हदसारहितुलङ्गं लूणादवत्तकेदुवंसं सग्गप्पब्भट्टं विअ सुलकुमालं एक्केण ज्जेव मम्मभेदिणा सिलीमुहेण भिण्णदेहं रहमज्झे परिट्ठिदं कुमालं आअदो । (ख)

---

(क) ततश्च देव, अतिक्रान्ते शरवर्षे क्षणमात्र ससिहनादे पाण्डवबले विमुक्ताक्रन्दे कौरवबल उत्थितो महान्कलकलो हा हतः कुमारवृषसेनो हा हत इति ।

(ख) ततो देव, महत्या वेलया प्रेक्ष्य हतसारथितुरङ्ग लूनातपत्रकेतुवंशं स्वर्गप्रभ्रष्टमिव सुरकुमारमेकेनैव मर्मभेदिना शिलीमुखेन भिन्नदेहं रथमध्ये परिस्थितं कुमारमागतः ।

---

**सुन्दरकवाक्ये** । ततो देव, अतिक्रान्ते शरवर्षे पाण्डवबले विमुक्तसिंहनादे साक्रन्दे कौरवबले हा हतः कुमारो वृषसेनो हा हत इति महान्कलकल उत्थित ॥ **सुन्दरकवाक्ये** । ततो देव, महत्या वेलयाह प्रेक्ष्य हतसारथितुरङ्गम लूनातपत्रकेतुवश स्वर्गपरिभ्रष्टमिव सुरकुमारकमेकेनैव मर्मभेदिना बाणेन भिन्नदेह रथमध्ये परिस्थित कुमारमागतः। अत्र केतुश्चिन्हम् । कुमार प्रेक्ष्याहमा-

---

१. 'तदो अ देव, क्खणमेत्त एव्व अदिक्कन्ते सरसपादे सहरिसासिहणादे पण्डवसेण्णे सविसादविमुक्काक्कन्दे कोरवबले समुत्थिदो' इति बहव.. २ 'हा हदो कुमालविससेणो त्ति' इति पाठ.. ३. '(सबाष्परोधम् ।)' इति पाठ . ४. 'तदो अ देव, पेक्खामि कुमाल हदसारहितुलङ्ग लूणादवत्तचावचामरकेदुवस सग्गब्भट्ट विअ सुलकुमाल हिअअमम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेह रहमज्झे पल्लत्थम् ।'; 'तदो अ देव, कुमाल हदसारहितुलङ्ग लूणादवत्तचामरकेदुवस सग्गप्पब्भट्ट विअ सुलकुमाल हिअअमम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेह रहमज्झे पल्लत्थ पेक्खिअ अह आअदो ।', 'तदो देव, महन्तीए वेलाए पेक्खामि कुमार हदसारधि हदतुरङ्ग लूणादवत्तर ससग्गपरिब्भट्ट विअ सुकुमारअ एक्केण जेव मम्मभेदिणा सिलीमुहेण हिअए विभिण्ण रहोत्सङ्गादो धराअले लुडितम् ।' इति पाठान्तराणि.

**दुर्योधनः**—(सास्रम् ।) अहह कुमारवृषसेन । अलमतः परं श्रुत्वा । हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलप्ररोह, हा प्रियदर्शन, हा दुःशासननिर्विशेष, हा सर्वगुरुवत्सल, प्रयच्छ मे प्रतिवचनम् ।

पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम् ।
प्राणापहारपरिवर्तितदृष्टि दृष्टं
कर्णेन तत्कथमिवाननपङ्कजं ते ॥ १० ॥

**सूतः**—आयुष्मन्, अलमत्यन्तदुःखावेगेन ।

**दुर्योधनः**—सूत, पुण्यवन्तो हि दुःखभाजो भवन्ति । अस्माकं पुनः

प्रत्यक्षं हतबन्धूनामेतत्परिभवाग्निना ।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतो व्यथा ॥ ११ ॥

(इति मोहमुपगतः ।)

---

गत इत्यन्वयः ॥ प्ररोहोऽङ्कुरः । **पर्याप्तेति** । पर्याप्तं तृप्तं यथेष्टं वा नेत्रं यत्र तत्तथा । 'पर्याप्तं तु यथेष्टं स्यात्तृप्तौ शक्तिनिवारणे' इति विश्वः । अचिरोदितचन्द्रवत्कान्तं रम्यम् । उद्भिद्यमानमुद्गच्छत् । एतादृशमप्याननं तव प्राणापहारे विनाशे परिवर्तितदृष्टि विपरीतदर्शनं कथं कर्णेन दृष्टम् । इवशब्दोऽनवक्लृप्तौ ॥१०॥ **प्रत्यक्षमिति** । एतद्धृदयमित्यन्वयः । दह्यते दाहवत्क्रियते ॥११॥ **सुन्दरकवाक्ये** ।

---

१. दुर्योधनः—(सास्रम् ।) अहह कुमारवृषसेन । अलमतः परं श्रुत्वा । हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा मदाज्ञाकर, हा गदायुद्धप्रिय शिष्य, हा शौर्यसागर, हा राधेयकुलप्ररोह' इति बहुपुस्तकानां पाठः, 'राजा—सुन्दरक, अलमिदानीं कथितेन । (सास्रम् ।) हा वत्स वृषसेन, क्वासि । देहि मे प्रतिवचनम् । (इति मोहमुपागतः ।) सूतः—समाश्वसिहि समाश्वसिहि । राजा—(उत्थाय । सकरुणम् ।) हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलद्रुमप्ररोह' इत्यपि क्वचित्पाठः २. 'हा प्रियदर्शन' इत्यस्मादारभ्य 'प्रयच्छ मे प्रतिवचनम्' इत्यन्तं क्वचिन्नास्ति. ३. 'प्राणापचारपरिवर्तितदृष्टि'. ४. 'अत्यन्तशोकावेगेन'; 'अलन्त दुःखावेगेन'. ५. 'सूत, पुण्यवन्तो दुःखभाजो भवन्ति। अस्माकं च' इति क्वचित्पाठः. ६. 'प्रत्यक्षहतबन्धूना'. ७. 'व्यर्थं'. ८. 'कुतो दुःखं कुतो व्यथा॥ भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन' इति क्वचित्पाठः.

**सूतः**—समाश्वसितु समाश्वसितु महाराजः । (इति पटान्तेन वीजयति ।)

**दुर्योधनः**—(लब्धसंज्ञः ।) भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन ।

**सुन्दरकः**—तदो अ देव, तधाविधस्स पुत्तस्स दंसणेण संगलिदं अस्सुजादं उज्झिअ अणवेक्खिदपरप्पहरणाभिओएण सामिणा अभिजुत्तो धणंजओ । तं अ सुदवहामरिसुद्दीविदपरक्कम तह परिक्कमन्तं पेक्खिअ णउलसहदेवपञ्चालप्पमुहेहिं अन्तरिदो धणंजअस्स रहवरो। (क)

**दुर्योधनः**—ततस्ततः ।

(क) ततश्च देव, तथाविधस्य पुत्रस्य दर्शनेन सगलितमश्रुजातमुज्झित्वानवेक्षितपरप्रहरणाभियोगेन स्वामिनाभियुक्तो धनंजयः । तं च सुतवधामर्षोद्दीपितपराक्रमं तथा परिक्रामन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनंजयस्य रथवरः ।

ततो देव, स्वामिना तथाविधस्य पुत्रस्य दर्शनेन सगलितमश्रुजातमुज्झित्वानपेक्षितपरप्रहरणाभियोगेनाभियुक्तो धनजय. । त च सुतववामर्षोद्दीपितपराक्रमवन्त प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनजयस्य रथवरः। अत्रान्तरितः

१ '(इति पटान्तेन वीजयति ।)' इत्यस्मादनन्तर 'आयुष्मन्, अलमत्यन्तदु.खावेगेन ।' इति क्वचिदधिक. पाठ.. २. 'भद्र सुन्दरक, वयस्येन किं प्रतिपन्नमङ्गराजेन', 'भद्र सुन्दरक, सप्रति किं प्रतिपन्न वयस्येनाङ्गराजेन' इति पाठौ. ३. 'तहह्रदस्स पुत्तस्स'; 'तधाविधस्स सुदस्स'. ४. 'अस्सुजल' ५. 'अणवेक्खिदपरप्पहरणाभिओएण सामिणा अङ्गराएण अहिउत्तो सो दुराआरो मज्झमपण्डवो । दुर्योधन.—ततस्तत' । सुन्दरक'—तदो देव, सुदवहामरिसुद्दीविदपरक्कम विमुक्कजीविदास तह परिक्कमन्त'; 'अणवेक्खिदपरप्पहरणेण सामिणा अङ्गराएण अभिजुत्तो धणजओ । तदो त सुदवहामरिसिद विमुक्कजीविदास तथा परिक्कमन्त', 'अणवेक्खिदपरप्पहरणेण सामिणा अङ्गराएण अभिजुत्तो धणजओ । तदो त अ सुदवहामरिसिदं विमुक्कजीविदासं तह परक्कमन्त' इति पाठान्तराणि ६. 'भीमणउलसहदेवपञ्चालप्पमुहेहिं'; 'सासङ्केहिं भीमणउलसहदेवपञ्चालप्पमुहेहिं'; 'णउलसहदेवप्पमुहेहिं पाञ्चालबलेहिं' इति पाठान्तराणि. ७. 'रहो'.

सुन्दरकः—तदो[१] देव, सल्लेण भणिदम्—'अङ्गराअ, हदतुलङ्गमो[२] भग्गकूवरो दे रहो ण जोग्गो भीमाज्जुणेहि सह आजुज्झिदुम्' त्ति पडिवट्टिदो रहो ओदारिदो सामी सन्दणादो बहुप्पआर अ समस्सासिदो[३]। तदो अ सामिणा सुइरं विलविअ परिअणोवणीदं अण्णं रहं पेक्खिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा। सुन्दरअ, एहि त्ति भणिद अ। तदो अहं उवगदो सामिसमीवम्। तदो अवणीअ सीस-

(क) ततो देव, शल्येन भणितम्—'अङ्गराज, हततुरङ्गमो भग्नकूबरस्ते रथो न योग्यो भीमार्जुनाभ्या सहायोद्धुम्' इति परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकार च समाश्वासितः। ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्य रथ प्रेक्ष्य दीर्घ नि:श्वस्य मयि दृष्टिर्विनिक्षिता। सुन्दरक, एहीति भणित च। ततोऽहमुपगतः स्वामिसमीपम्। ततोऽपनीय शीर्ष-

पिहित॰॥ **सुन्दरकवाक्ये**। ततो देव, शल्येन भणितम्—'अयि राधेय, स्खलिततुरङ्गमो भग्नकूबरस्ते रथो न योग्यो वोढु भीमार्जुनाभ्यां सह साम्प्रत-मायोधितुम्।' तत परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकार च स-माश्वासित। तत स्वामिना सुचिर विलप्य परिजनोपनीतमन्य रथमारुह्य क्षणेन दीर्घ नि श्वस्य मयि दृष्टिर्विनिहिता। सुन्दरक, आगच्छेति भणितं च। तत उप-

१. 'तदो अज्जुणचावमहाप्पलअपओहरणिस्सरिदसरधारासहस्सेहि पूरिदेसु दिसामुहेसु सल्लेण भणिदो सामी अङ्गराओ। जहा अङ्गराअ' इति बहुपुस्तकाना पाठ. २ 'क्खुभिदतुलङ्गमो मथिदचक्कणेमिकूवरो दे रहो। ता ण जुत्त भीमाज्जुणेहि सह आजुज्झिदु त्ति भणिअ णिवट्टिदो रहो समराङ्गणादो', 'हदतुलङ्गमो मथिदचक्कणेमिकूवरो दे रहो। ता ण जुत्त भीमाज्जुणेहि अहिजुज्जिदु त्ति भणिअ णिवट्टिदो रहो', 'हदतुरङ्गमो भग्गकूवरो रहो ण जोग्गो भीमसेणाज्जुणेहि अभिजुत्तु त्ति भणिअ परिवट्टिअ रह'. इति पाठान्तराणि ३ 'अस्सासिदो। दुर्योधन —ततस्तत। सुन्दरक —तदो अ सामिणा सुइर विलम्बिअ परिअणो अभिहिदो अण्ण रह मे उवणेहि त्ति। परिअणोवणीद अण्ण रह पेक्खिअ मइ दिण्णदिट्ठी सुन्दरअ, एहि त्ति भणिअ अ। अह उवगदो समीवम्'; 'आस्सासिदो। दुर्योधन —ततस्तत। सुन्दरक.—तदो अ देव, सामिणा वि सुइर विलविअ परिअणो अभिहिदो अण्ण रह मे उवणेहि त्ति। परिअणोवणीद अ अण्ण रह पेक्खिअ अस्सुजल उज्झिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा। भणिद अ सुन्दरअ, एहि त्ति। तदो गदोम्हि सामिसमीवम्' इति पाठौ.

ट्ठाणादो पट्टिअं सरीरसंगलिदेहि सोणिअबिंदुहि लित्तमुहं बाणं कदुअ अहिलिहिअ प्पेसिदो देवस्स संदेसो। (इति पट्टिकामर्पयति।) (क)

(दुर्योधनो गृहीत्वा वाचयति।)

यथा—'स्वस्ति, महाराजदुर्योधनं समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति।

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमा-
न्भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः।
यत्संभावित इत्यहं न च हतो दुःशासनारिर्मया
तं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ १२ ॥'

**दुर्योधनः**—वयस्य कर्ण, किमिदं भ्रातृशतवधदुःखितं मामपरेण वाक्शल्येन घट्टयसि। भद्र सुन्दरक, अथेदानीं किमारम्भोऽङ्गराजः।

---

स्थानात्पट्टिका शरीरसगलितैः शोणितबिन्दुभिर्लिप्तमुखं बाण कृत्वाभिलिख्य प्रेपितो देवस्य सदेशः।

---

गतोऽह स्वामिसमीपम्। तत शीर्षस्थानात्पट्टिकामपनीय स्वशरीरसगलितै शोणितबिन्दुभि सुस्निग्धमुख बाण कृत्वाभिलिख्य प्रेषितो देवस्य सदेश। अत्र 'कूबरस्तु युगधर' इत्यमर। शीर्ष मस्तकम्। अपनीयानीय। **अस्त्रेति**। अय कर्णः। कृती कुशल। इत्यनेनाकारेणाह यत्सभावितो भवता प्रसिद्ध कृत। प्रतिकार. प्रतीकार इति शब्दभेदः। त प्रतीकारमेहि गच्छ। तथा च युद्ध्वा वा रुदित्वा वा। राजन्, भ्रातृदु ख त्यजेति भाव ॥ १२ ॥ **सुन्दरकवाक्ये**।

---

१ 'दिट्ठवअण'. २. 'अहिलिहिदो एसो देवस्स संलेहो', 'अहिलिहिदो एसो देवस्स सदेसो'; 'प्पेसिदो देवस्स सदेसो' इति पाठान्तराणि ३. '(इति पत्रिकामर्पयति।)', '(पट्टिका दर्शयति।)' इति पाठौ. ४. 'महाराज दुर्योधन'. ५. 'त्वत्सभावित इत्यह' इति पाठ. ६. 'त्व'. ७. 'वयस्य कर्ण कर्ण' इति पाठ.. ८. 'भ्रातृशतवधदु.खदु.खितं'; 'हतभ्रातृशत'.

सुन्दरकः—देवं, अज्जवि आरम्भो पुच्छीअदि। अवणीदसरीरावरणो अप्पवहकिदणिच्चओ पुणोवि पत्थेण सह समलं मग्गदि। (क)

दुर्योधनः—(आवेगादासनादुत्तिष्ठन्।) सूत, रथमुपनय। सुन्दरक, त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय। अलमतिसाहसेन। अभिन्न एवायमावयोः संकल्पः। न खलु भवानेको जीवितपरित्यागाकाङ्क्षी। किं तु

हत्वा पार्थान्सलिलमशिवं बन्धुवर्गाय दत्त्वा
मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च।
कृत्वान्योन्यं सुचिरमपुनर्भावि गाढोपगूढं
संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ च ॥ १३ ॥

अथवा शोकं प्रति मया न किञ्चित्संदेष्टव्यम्।

वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः।
त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि ॥ १४ ॥

---

(क) देव, अद्याप्यारम्भः पृच्छ्यते। अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गयते।

---

देव, अद्याप्यारम्भ पृच्छ्यते। अपनीतशरीरावरण आत्मवधकृतनिश्चय पुनरपि पार्थेन सह समर मृगयते ॥ 'सकल्प कर्म मानसम्' इत्यमर' ॥ **हत्वेति**। अशिवममङ्गलम्। बाष्प मुक्त्वा रुदित्वा। अपुनर्भावि न पुनर्भविष्यत्। गाढोपगूढ गाढालिङ्गनम्। इमा हततनु निन्द्यशरीरमेवमेव कृत्वावा सत्यक्ष्याव इत्यन्वय। आवा कीदृशौ। प्रथम दु खितौ ततो निर्वृतौ मुमुक्षू॥ १३ ॥ **वृषसेन इति**। अनुजः कनिष्ठ ॥ १४ ॥ **सुन्दरकवाक्ये**। यद्देव आज्ञापयति ॥

---

१. 'देव, अवणीदसरीरावरणो अप्पवहकिदणिच्चओ सअ एव्व समलं मग्गदि' इति पाठः. २. 'दुर्योधन.—(श्रुत्वा सत्वरमुत्तिष्ठन्।) सुन्दरक, त्वमपि मद्वचनात्त्वरिततर गत्वा वयस्यमङ्गराज प्रबोधय। न खलु जयाकाङ्क्षी भवानिदानीम्। अभिन्न एवायमावयोः सकल्पः। किं तु' इति पाठ.. ३. 'पार्थं'. ४. 'बन्धुभि.'. ५. 'दुःखितौ निर्वृतौ वा', 'निर्वृतौ दु.खितौ वा'; 'निर्वृतौ दु.खितौ च'. ६. 'कर्णं प्रति'; 'सशोक प्रति'; 'सशोक कर्णं प्रति'. ७. 'त्वा बोधयिष्ये यदहं मा त्व वा बोधयिष्यसि' इति पाठ..

**सुन्दरकः**—जं देवो आणवेदि । (इति निष्क्रान्त ।) (क)

**दुर्योधनः**—तूर्णमेव रथमुपस्थापय ।

**सूतः**—(कर्णं दत्वा ।) देव, हेषासंवलितो नेमिध्वनिः श्रूयते । तथा तर्कयामि नूनं परिजनोपनीतो रथः ।

**दुर्योधनः**—सूत, गच्छ त्वं सज्जीकुरु ।

**सूतः**—यदाज्ञापयति देवः । (इति निष्क्रम्य पुन प्रविशति ।)

**दुर्योधनः**—(विलोक्य ।) किमिति नारूढोसि ।

**सूतः**—एष ननु तातोऽम्बा च संजयाधिष्ठितं रथमारुह्य देवस्य समीपमुपगतौ ।

**दुर्योधनः**—किं नाम तातोऽम्बा च संप्राप्तौ । कष्टमतिबीभत्समाचरितं दैवेन । सूत, गच्छ त्वं स्यन्दनं तूर्णमुपहर । अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

**सूतः**—देव, त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि ।

**दुर्योधनः**—सूत, कथमिव समाश्वासयामि विमुखभागधेयः । पश्य ।

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
भ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च ।

(क) यद्देव आज्ञापयति ।

हेषाश्वशब्द । नेमिश्चक्रप्रान्त ॥ त्वदेकबान्धवौ त्वमेको बान्धवो ययोरिति समास ॥ **अद्येति** । आपामह दु शासनश्च । तामवस्था मरणरूपाम् । पित्रोरित्यत्र

१. '(इति निष्क्रान्त ।) दुर्योधन —अये नमिध्वनिरिव । सूत —आयुष्मन्, एष सद्य एव सवर्धितो नेमिध्वनिः । दुर्योधन.—नून परिजनोपनीतो रथः । गच्छ त्व सज्जीकुरु ।' इत्यपर पाठः. २ 'तातो धृतराष्ट्रोऽम्बा च'. ३. 'सजयाधिरूढ रथमारूढौ देवसकाशमनुप्राप्तौ', 'सजयेनाधिरूढौ देवदर्शनमनुप्राप्तौ', 'सजयाधिरूढ रथमारूढौ देवदर्शनमनुप्राप्तो' इति पाठान्तराणि ४. 'समीपमागतौ'. ५. 'किं नाम तातोऽम्बा च सप्राप्तौ' इति पाठ. केषुचित्पुस्तकेषु नास्ति. ६. 'अहो, अतीव बीभत्समाचरित दैवेन । सूत, गच्छ स्यन्दनमुपहर' इति पाठ . ७. 'त्वदेकबान्धवौ'. ८. 'मन्दभाग्यः'.

तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥ १९ ॥

तथाऽप्यवश्यं वन्दनीयौ गुरू ।

(इति निष्क्रान्तौ ।)

इति चतुर्थोऽङ्कः ।

---

'पिता मात्रा' इत्येकशेष. । घृणा करुणा जुगुप्सा वा । 'जुगुप्सा करुणे घृणे' इत्यमर । पित्रो पार्श्वं गत्वा किं नु वक्ष्यामीत्यन्वय ॥ १५ ॥

असूत य रत्नवरो गुणाढ्यो नानागुणाढ्या दमयन्तिकापि ।
जगद्धर तस्य कृतौ व्यरसीदङ्कश्चतुर्थो वरटिप्पनेऽत्र ॥

इति चतुर्थोऽङ्कः ।

---

१. 'पार्श्वं पित्रोरहमपघृण किं नु वक्ष्यामि गत्वा', 'पार्श्वं पित्रोरहमुपगत किं नु वक्ष्यामि ताभ्याम्'; 'पार्श्वं पित्रोरहमुपगत किं नु वक्ष्यामि गत्वा' इति पाठान्तराणि.

पञ्चमोऽङ्कः ।

(ततः प्रविशति [1]रथयानेन गान्धारी संजयो धृतराष्ट्रश्च ।)

**धृतराष्ट्रः**—[2]वत्स संजय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति । कच्चिज्जीवति वा न वा ।

**गान्धारी**—[3]जाद, जइ सच्चं [4]जीवदि मे वच्छो ता कधेहि कस्सि देसे वट्टदि । (क)

**संजयः**—[5]नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

**[6]गान्धारी**—(सकरुणम् ।) जाद, एआइ त्ति भणासि । [7]किं णु क्खु संपदं भादुसदं से पास्से भविस्सदि । (ख)

---

(क) जात, यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते ।

(ख) जात, एकाकीति भणसि । किं नु खलु सांप्रतं भ्रातृशतमस्य पार्श्वे भविष्यति ।

---

एकशेषोऽवशिष्टः । प्रवालोऽङ्कुरः । 'प्रवालमङ्कुरेऽप्यस्त्री' इत्यमरः ॥ **गान्धारीवाक्ये** । जात, यदि सत्यं जीवति मे पुत्रकस्तत्कथय कस्मिन्नुद्देशे वर्तते ॥ जात, एकाकीति भणसि । अन्यथा किं सांप्रतं भ्रातृशतमस्य पार्श्वे भविष्यति ।

---

१ 'स्यन्दनयानेन'. २. 'वत्स संजय, कुरुकुलकाननैकशेषप्रवालो मे वत्सो दुर्योधन.'; 'संजय, कथय कस्मिन्नुद्देशे स कुरुकाननैकशेषप्रवालो मे वत्सो दुर्योधनस्तिष्ठति।'; 'वत्स सजय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधन ।'; 'सजय, कथय कथय कस्मिन्नुद्देशे सकलकुलकाननैकपल्लवो वत्सो मे दुर्योधन ।', 'वत्स सजय, कस्मिन्नुद्देशे कुरुकुलकाननैकप्रवालो दुर्योधन ।', 'वत्स संजय, कुलकाननैकशेषप्रवालो मे वत्सो दुर्योधन ' इति पाठान्तराणि. ३. 'जाद' इति क्वचिन्नास्ति. ४. 'जीवदि वच्छो ता कस्सि कधेहि त उद्देसम्'; 'जीवदि सो मे वच्छो कहेहि त उद्देसम्', 'जीवदि सो ता कस्सि कधेहि त उद्देसम्' इति पाठान्तराणि. ५ 'तात, अम्ब, नन्वेष महाराज ' इति पाठ ६ 'गान्धारी—(सास्रम् ।) जाद, एआइ त्ति भणासि'; 'गान्धारी—(सकरुणम् ।) जाद, एआइ त्ति ण भणासि'; 'गान्धारी—जाद, एआइ त्ति भणासि' इति पाठान्तराणि. ७. 'किं णु क्खु सापद भादुसद से पास्से णत्थि', 'किं णु क्खु सपद तस्स भादुसद पास्से णत्थि'; 'किं सापद भादुणो से समीवे ण होन्ति'; 'ण क्खु सपद भादुसद से पास्से भविस्सदि' इति पाठान्तराणि.

**संजयः**—तात, अम्ब, [1]अवतरतं स्वैरं रथात्।

([2]उभाववतरणं नाटयतः।)

(ततः प्रविशति [3]सव्रीडमुपविष्टो दुर्योधनः।)

**संजयः**—([4]उपसृत्य।) विजयतां महाराजः। [5]नन्वेष तातोऽम्बया सह प्राप्तः। [6]किं न पश्यति महाराजः।

(दुर्योधनो वैलक्ष्यं नाटयति।)

**धृतराष्ट्रः**—

शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे [7]कृतापाश्रयः।
[8]दुर्वारान्निर्जितसान्त्वितान्नरपतीनालोकयंल्लीलया
सह्या पुत्रक वेदनेति न मया पापेन [9]पृष्टो भवान्॥ १॥

(धृतराष्ट्रो गान्धारी च [10]स्पर्शेनोपेत्यालिङ्गतः।)

**गान्धारी**—वच्छ, [11]अदिगाढप्पहारवेअणापज्जाउलस्स [12]अम्हेसु सण्णिहिदेसु वि ण प्पसरदि दे वाणी। (क)

**धृतराष्ट्रः**—वत्स दुर्योधन, [13]किमकृतपूर्वः संप्रति मय्यप्ययमव्याहारः।

(क) वत्स, अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी।

अत्र जात पुत्रक ॥ सव्रीडं सलज्जं यथा स्यादेवम् ॥ **गान्धारीवाक्ये**। जात, अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी॥ अपकृतमपकारः कृतः ॥ **गान्धारीवाक्ये**। जात, यदि त्वं मां नालपसि

१. 'अवतरत रथात्', 'अवतरत स्वैरं रथात्'. २ '(सर्वेऽवतरणं नाटयन्ति।)' इति पाठः. ३. 'सव्रीडोपविष्टः' ४ '(उपगम्य।)'. ५ 'ननु' इति क्वचिन्नास्ति ६. 'किं न पश्यसि महाराज'. ७. 'कृतोपाश्रयः'. ८ 'निर्जितशात्रवान्'. ९. 'दृष्टः'. १०. 'स्पर्शेनोपेत्य परिष्वजेते' इति पाठः. ११ 'गाढप्पहार–'. १२. 'अह्मेसु वि ण दे प्पसरदि वाणी', 'किं अह्मेसु वि ण प्पसरदि दे वाणी' इति पाठौ १३. 'किमकृतपूर्वः संप्रति मय्यव्यवहारः', 'अभूतपूर्वो मय्यपि संप्रत्यनध्याहारः.' इति पाठौ.

**गान्धारी**—वच्छ, जइ तुमं वि अम्हे णालवसि ता किं संपदं वच्छो दुस्सासणो आलवदि अध दुम्मरिसणो वा अण्णो वा । (क)
(इति रोदिति ।)

**दुर्योधनः**—

जातोऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसां तव चाम्ब हेतुः ।
दुर्जातमत्र विमले भरतान्वये वः
किं मां सुतक्षयकरं सुत इत्यवैषि ॥ २ ॥

**गान्धारी**—जाद, अलं परिदेविदेण। तुमं वि दाव एक्को इमस्स अन्धजुअलस्स मग्गोवदेसओ । ता चिरं जीव । किं मे रज्जेण जएण वा । (ख)

(क) वत्स, यदि त्वमप्यस्मान्नालपसि तत्किं सांप्रतं वत्सो दुःशासन आलपत्यथ दुर्मर्षणो वान्यो वा ।

(ख) जात, अलं परिदेवितेन । त्वमपि तावदेकोऽस्यान्धयुगलस्य मार्गोपदेशकः । तच्चिरं जीव । किं मे राज्येन जयेन वा ।

तदा किं सा सांप्रतं वत्सो दुःशासन आलपतु दुर्मर्षणो वाथान्यो वा ॥ **जात इति** । हे अम्ब, तव तातस्य च बाष्पपयसां हेतुः कारणं जातोऽस्मि । कीदृशः । अप्रतिकृतोऽप्रतीकारविषयीकृतो योऽनुजनाशस्तद्दर्शी । त्वं मां सुत इति किमवैषि जानासि । कीदृशम् । वो युष्माकमिह भरतकुले दुर्जातं दुष्टपुत्रम् । पुनः कीदृशम् । वः सुतविनाशकरम् । व इति काकाक्षिगोलकवदुभयान्वयि । आकाङ्क्षाया उभयत्र सत्त्वात् । शब्दान्वयस्य वाकाङ्क्षक्रमेणोत्थानादित्यन्यत्र विस्तरः ॥२॥ **गान्धारीवाक्ये** । जात, अलं परिदेवितेन । त्वमेव तावदेतस्या-

१ 'गान्धारी—(सकरुणम् ।) वच्छ' इति क्वचित्पाठः. २. 'अम्हे णालवसि किं दाणीं दुस्सासणो दुम्मरिसणो अण्णो वा आलविस्सदि'; 'अम्हेसु णालवसि ता किं संपदं वच्छो मे दुस्सासणो आलवदि अध दुम्मरिसणो विकण्णो वा'; 'अम्हे णालवसि किं दाणीं दुस्सासणो आलविस्सदि दुम्मरिसणो वा' इति पाठान्तराणि ३ 'दुर्योधनः—अम्ब' इति क्वचित्पाठ. ४ 'पाप.', 'योध.' ५ 'अपि', 'अस्मिन्'. ६ 'अलमलं परिदेविदेण' ७.'एक्को इमस्स अन्धजुअलस्स मग्गोवदेसओ चिरं जीव। अलं मे रज्जेण जएण वा।', 'एक्को अन्धजुअलस्स मग्गोवदेसओ चिरं जीव। किं मे रज्जेण वेरेण वा।', 'एक्को इमस्स अन्धजुअलस्स पन्थोवदंसओ चिरं जीव। भोदु मे रज्जेण वेरेण वा।' इति पाठान्तराणि.

**दुर्योधनः**—

मातः किमप्यसदृशं[1] कृपणं वचस्ते
सुक्षत्रिया क्व भवती क्व च दीनतैषा[2] ।
निर्वत्सले सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥ ३ ॥

नूनं विचेष्टितमिदं सुतशोकस्य[3] ।

**संजयः**—महाराज[4], किं वायं लोकवादो वितथः 'न घटस्य कूपपतने रज्जुस्तत्रैव प्रक्षेप्तव्या' इति ।

**दुर्योधनः**—अपुष्कलमिदम्[5] । उपक्रियमाणाभावे किमुपकरणेन । (इति रोदिति ।)

**धृतराष्ट्रः**—(दुर्योधनं परिष्वज्य ।) वत्स[6], समाश्वसिहि । समाश्वासय[7] चास्मानिमामतिदीनां मातरं च ।

**दुर्योधनः**—तात, दुर्लभः[8] समाश्वास इदानीं युष्माकम् । किं तु

कुन्त्या सह युवामद्य मया निहतपुत्रया ।
विराजमानौ शोकेऽपि[9] तनयाननुशोचतम् ॥ ४ ॥

---

न्वयुगलस्य मार्गोपदेशको भव । तच्चिरं जीव । किं मे राज्येन जयेन वा ॥ **मातरिति** । किमप्यनिर्वचनीयम् । कृपणं दीनम् । सुक्षत्रिया शोभनक्षत्रियजातिः । क्वेति । 'अत्यन्तासंभवेऽर्थे द्वौ क्वौ प्रयुज्येते' इति कोषः । हे निर्वत्सले वात्सल्यवति वात्सल्यहीने वा ॥ ३ ॥ किं वितथोऽसत्यः । किं तु सत्य एवेत्यर्थः । रज्जुः रशनादिप्रग्रहः ॥ इदं वचोऽपुष्कलमश्रेष्ठम् । 'श्रेयान्श्रेष्ठः पुष्कलः स्यात्' इत्यमरः ॥ **कुन्त्येति** । युवामद्य कुन्त्या सह तनयाननुशोचतमित्यन्वयः ॥४॥

१ 'विकृतं' २. 'एना'. ३ 'नूनं विचेष्टितमिदं सुतशोकस्य' इति क्वचिन्नास्ति. ४. 'महाराज, किं चायं लोकप्रवादोऽपि विस्मृतो न च घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति', 'महाराज, किं वायं लोकवादो वितथो न घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति' इति पाठौ. ५ 'अलमलम् । उपक्रियमाणे किमपकारेण', 'अयुक्तमिदम् । अपक्रियमाणे किमुपकारेण', 'अपुष्कलमिदम् । ननु उपक्रियमाणाभावे किमुपकरणेन' इति पाठान्तराणि. ६ 'वत्स, समाश्वसिहि समाश्वसिहि' इति क्वचित्पाठः. ७. 'समाश्वासय मां जननीं च', 'समाश्वासय च मामिमामतिदीनां मातरं च', 'समाश्वासय चास्मानिमामतिदीनां मातरं ते च' इति पाठान्तराणि. ८. 'दुर्लभमिदानीं पुनः समाश्वासनं युष्माकम्' इति पाठः. ९. 'लोके'.

**गान्धारी**—जाद, एदं[1] एव्व संपदं प्पभूदं [2]जं तुमं वि दाव एक्को णाणुसोचइदव्वो। ता जाद, प्पसीद । एसो दे सीसञ्जली । णिवट्टीअदु समरव्वावारादो । अपच्छिमं करेहि पिदुणो वअणम् । (क)

**धृतराष्ट्रः**—वत्स, शृणु वचनं [3]तवाम्बाया [4]मम च निहताशेषबन्धुवर्गस्य । [5]पश्य ।

[6]दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः [7]शमयतो भीतं जगत्फाल्गुनात् ।

(क) जात, एतदेव साम्प्रत प्रभूत यत्त्वमपि तावदेको नानुशोचितव्यः । तज्जात, प्रसीद । एष ते शीर्षाञ्जलिः । निवर्त्यता समरव्यापारात्। अपश्चिम कुरु पितुर्वचनम् ।

**गान्धारीवाक्ये** । जात, इदमेव साम्प्रत मे प्रभूत यत्त्वामप्येक नानुशोचयिष्ये । तज्जात, प्रसीद । एष ते शीर्षेऽञ्जलि. । निवर्त्यतामेतस्मात्समरव्यापारात् । अपश्चिम कुरु पितुर्वचनम्। अत्र प्रभूतं युक्तम् । शीर्षेऽञ्जलिः प्रणामः। अपश्चिममलङ्घ्यम् ॥ सपत्न शत्रु ॥ **दायादा इति** । दायादा शत्रव । अग्रत कर्णस्यैव । फाल्गुनादर्जुनात् । मे वत्सानां निधनेनाय रिपुस्त्वयि शेषप्रतिज्ञ-

१. 'जाद, दाणि एद एव्व सपद प्पभूद', 'जाद, एद वि सपद प्पभूद'; 'जाद, एद एव्व सपद मे प्पभूद', 'जाद, एद एव्व सपद प्पभूददर' इति पाठान्तराणि २. 'ज तुम वि दाव एक्को जीवसि ।क अण्णं अणुसोइस्सम् । ता जाद, अकालो दे समरस्स । प्पसीद । एसो दे अञ्जली । णिवट्टेहि समरव्वावारादो । अपच्छिमं करेहि वअणम् ।'; 'ज तुमं वि दाव एक्को जीवसि । क अण्ण अणुसोइस्सम् । ता जाद, अकालो दे समरस्स । प्पसीद । एसो दे अञ्जली । निवट्टेहि समरनिब्बन्धादो । अपच्चिम करेहि वअणम् ।', 'ज तुम वि दाव एक्क णाणुसोचइस्सम् । ता जाद, णिवट्टेहि समरादो । अपच्छिम करेहि सुवअणम् ।', 'तुम वि दाव एक्को णाणुसोचइदव्वो । ता जाद, प्पसीद प्पसीद । एसो दे सीसञ्जली । णिवट्टीअदु समरव्वावारादो । अवस्स पिदुणो वअण करेहि ।' इति पाठान्तराणि ३. 'तव' इति क्वचिन्नास्ति. ४. 'ममापि च निहताशेषबन्धुवर्गस्य', 'मम च निहतसकलबन्धुवर्गस्य'; 'मम सकलबान्धवस्य च', 'मम च सकलहतबन्धुवर्गस्य', 'मम च निहताशेषवर्गस्य' इति पाठान्तराणि. ५. 'पश्य' इत्यत्र 'अपि च तात दुर्योधन' इति क्वचित्पाठः. ६. 'देवा वा'. ७. 'शमयता भीतं यत. फाल्गुनात्'; 'शमयता भीत न बीभत्सुना'.

वत्सानां निधनेन[1] मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं[2] वैरिषु[3] मुञ्च तात[4] पितरावन्धाविमौ पालय ॥ ५ ॥

**दुर्योधनः**—समरात्[5]प्रतिनिवृत्य किं मया कर्तव्यम् ।

**गान्धारी**[6]—जाद, जं पिदा दे विउरो वा भणादि । (क)

**संजयः**—देव[7], एवमिदम् ।

**दुर्योधनः**—संजय, अद्याप्युपदेष्टव्यमस्ति[8] ।

**संजयः**—देव[9], यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम् ।

**दुर्योधनः**—(सक्रोधम्[10] ।) श्रृणुमस्तावद्भवत एव प्रज्ञावतोऽस्मान्प्रति प्रतिरूपमुपदेशम् ।

---

(क) जात, यत्पिता ते विदुरो वा भणति ।

---

इत्यन्वयः । त्वदेकावशिष्टप्रतिज्ञ इत्यर्थः । हे तात मान्य । पितरौ मातापितरौ । एकशेषात् ॥ ५ ॥ **गान्धारीवाक्ये** । जात, पिता ते विदुरो यद्भणति । पिता पितृकल्पो हितोपदेशात् ॥ प्राणित जीवितम् । 'सपन्नश्च प्रकृतिभिर्महोत्साहः कृतश्रम । जेतुमेषणशीलश्च विजिगीषुरिति स्मृत. ॥' इति विजिगीषुलक्षणम् ॥

---

१ 'निधनाच्च मारुतिरसौ शेपप्रतिज्ञस्त्वयि' इति पाठ . २ 'क्रोध'. ३ 'वैरिणि'. ४ 'वत्स' ५ 'तात, अम्ब, समरात्प्रतिनिवृत्य कि करिष्यामि' इति पाठ . ६ 'गान्धारी—जाद, न पिदा दे विउरो वा भणिस्सदि', 'गान्धारी—ज पिदा दे भणिस्सदि त अणुचिट्ठ', 'गान्धारी—ज पिदा दे विउरो वा भणिस्सदि त अणुचिट्ठ', 'गान्धारी—ज पिदा दे विउरो ना भणदि त अणुचिट्ठिदव्वम्' इति पाठान्तराणि. ७ 'राजन्' ८. 'उपदेष्टव्यमस्तीति', 'उपदेष्टव्यमिति'. ९. 'राजन्, यावत्प्राणितव्य तावदुपदेष्टव्यभूमयो विजिगीषव प्रज्ञावताम्', 'राजन्, यावत्प्राणनाशस्तावदुपदेष्टव्या नृपतय प्रज्ञावताम्', 'राजन्, यावत्प्राणनाशस्तावदुपदेष्टव्या नृपतयो विजिगीषव. प्रज्ञावताम्', 'देव, यावत्प्राणास्तावदुपदेष्टव्यभूमयो विजिगीषव. प्रज्ञावताम्', 'राजन्, यावत्प्राणनाशस्तावदुपदेष्टव्यभूमयो विजिगीषव. प्रज्ञावताम्', 'राजन्, यावत्प्राणितव्य तावदुपदेष्टव्या नृपतयो विजिगीषवः प्रज्ञावताम्' इति पाठान्तराणि. १०. '(सक्रोधम्।) श्रृणुमस्तावद्भवत एव प्रज्ञावत. सम्प्रत्यस्मदनुरूपमुपदेशम्', '(सासूयम् ।) श्रृणुमस्तावत्प्रज्ञावतो भवतोऽस्मत्प्रतिरूपमेवमुपदेशम्'; 'श्रृणुमस्तावद्भवतः प्रज्ञावत सम्प्रत्यनुरूपमुपदेशम्' इति पाठान्तराणि.

**धृतराष्ट्रः**—वत्स, युक्तवादिनि संजये [1]किमत्र क्रोधेन। यदि प्रकृतिमापद्यसे [2]तदहमेव भवन्तं ब्रवीमि। श्रूयताम्।

**दुर्योधनः**—कथयतु तातः।

**धृतराष्ट्रः**—[3]वत्स, किं विस्तरेण। संधत्तां भवानिदानीमपि युधि-ष्ठिरमीप्सितपणबन्धेन[4]।

**दुर्योधनः**—तात, [5]तनयस्नेहवैक्लव्यादम्बा [6]बालिशत्वेन संजयश्च [7]काममेवं ब्रवीतु। [8]युष्माकमप्येवं व्यामोहः। अथ वा प्रभवति [9]पुत्र-नाशजन्मा हृदयज्वरः। [10]अन्यच्च। तात, [11]अस्खलितभ्रातृशतोऽहं यदा तदावधीरितवासुदेवसामोपन्यासः सम्प्रति [12]हि दृष्टपितामहाचार्या[13]नुज-राजचक्रविपत्तिः [14]स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः संधिम्। अन्यच्च। नयवेदिन्संजय,

---

वैक्लव्याद्विह्वलत्वात्। अम्बा वदतीति शेष। बालिशत्वेन मूर्खतया। संजयो वदतीति शेष.। नाम निश्चये। हृदयज्वरस्तातस्येति शेष·। **तातेत्यादि**। हे तात, दुर्योधन कथं संधिं करिष्यतीत्यन्वय। अस्खलितमविनष्टम्। साम संधानम्। पितामहो भीष्म। आचार्यो द्रोण। राजचक्रं क्षत्रियसघ। कीदृशं सधिम्। उदात्तकथाव्रीडाकरमुत्तमकथालज्जाकरम्। दु खान्त च॥ **हीयमाना-**

---

१. 'तव किमत्र'. २. 'तदहमेव भवन्त किंचित्कथयामि', 'तदहमेव कथयामि', 'तदहमेव तावद्भवन्त ब्रवीमि', 'तदहमेव ब्रवीमि' इति पाठान्तराणि. ३. 'वत्स, किं विस्तरेण' इत्यत्र 'किं विचारेण' इति क्वचित्पाठः ४. 'इदानीमपि युधिष्ठिरस्य समीप्सितेन पणेन', 'इदानीं युधिष्ठिरप्रार्थितपणेन', 'इदानीं युधिष्ठिरस्य समी-प्सितेन णेन' इति पाठान्तराणि. ५ 'तनयस्नेहात्'. ६ 'बालिशत्वात्' ७ 'एतद्ब्रवीतु'; 'एतद्ब्रवीति'. ८ 'युक्तो युष्माकमप्यय मोह इति प्रभवति', 'युष्माकमपि चाय मोह.। अथ वा प्रभवति','अम्बा तनयवैक्लव्याद्बालिशत्वेन सजयो मामेव ब्रुवता नाम व्यामोहो भवतामपि। अथ वा प्रभवति' इति नानाविधः पाठ. ९. 'पुत्रनाशशोकजन्मा'. १०. 'अन्यच्च' इति क्वचिन्नास्ति. ११. 'अस्खलितभ्रातृशतस्तदावधीरितवासुदेवसामो-पन्यासः'; 'अस्खलितभ्रातृशतस्तदावधीरितवासुदेवशमोपन्यास.' इति पाठौ. १२ 'हि' इति क्वचिन्नास्ति. १३. 'अनुराजचक्रविपत्ति'; 'अनुजराजन्यशतविपत्ति'. १४. 'शरीरमात्रस्नेहात्', 'शरीरमात्रकस्नेहात्'

हीयमानाः किल रिपोर्नृपाः संदधते परान् ।
दुःशासने हतेऽहीनाः सानुजाः पाण्डवाः कथम् ॥ ६ ॥

**धृतराष्ट्रः**—वत्स, एवं गतेऽपि मत्प्रार्थनया न किंचिन्न करोति युधिष्ठिरः । अन्यच्च । सर्वमेवापकृतं नानुमन्यते ।

**दुर्योधनः**—कथमिव ।

**धृतराष्ट्रः**—वत्स, श्रूयतां प्रतिज्ञा युधिष्ठिरस्य । नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामीति । बहुच्छलत्वात्सङ्ग्रामस्यानुजनाशमाशङ्कमानो यदेव भवते रोचते तदेवासौ सज्जः संधातुम् ।

**संजयः**—एवमिदम् ।

**गान्धारी**—जाद, उपपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणम् । (क)

(क) जात, उपपत्तियुक्त प्रतिपद्यस्व पितुर्वचनम् ।

**इति** । किलागमे । रिपोरहितात् । हीयमाना हीना. । नृपाः पराञ्शत्रून्सदधते । स्वापेक्षया यदि परे शक्ता भवन्ति तदा तै सम सधि कर्तव्य इति भाव । दुःशासने हते सति सानुजा पाण्डवा अहीना' सन्त. कथ परान्संदधत इत्यर्थ ॥ ६ ॥ एव गतेऽपि भवदुक्तनीतेर्यथार्थत्वेऽपीत्यर्थ । मम प्रार्थनया युधिष्ठिर किंचिन्न करोत्येव न । कि तु किंचित्करोत्येव । ननु हे राजन्, युधिष्ठिर सर्वमेवापकृत नैवानुमन्यते । तस्य दक्षिणत्वात्सदा धर्मपरायणत्वाच्चेति भाव ॥ कथमिव कुत इदमित्यर्थ ॥ भवते रोचते तुभ्य रुचिविषयीभवति । 'रुच्यर्थानां प्रीयमाण ' इति चतुर्थी ॥ **गान्धारीवाक्ये** । जात, उपपत्तियुक्त प्रतिपद्यस्व पितुर्वचनम् । अत्र प्रतिपद्यस्व जानीहि ॥ **एकेनेति** । विनानु-

१. 'हीयमानान्किल रिपून्नृपा सदधते कथम् । दु शासनेन हीनोऽह सानुज. पाण्डवोऽधुना ॥' इति बहुपुस्तकाना पाठ , 'हीयमानाः किल रणे नृपा. सदधते परान् । दु.शासने हते हीनाः पाण्डवा सानुजे कथम् ॥' इत्यपि क्वचित्पाठ' २ 'कि न करोति युधिष्ठिर.'. ३. 'सर्व दैवापकृष्ट मन्यते युधिष्ठिरः', 'सर्वदैवापकृष्टमात्मानं मन्यते स भवद्भ्य.'; 'सदैवापकृष्ट मन्यते युधिष्ठिर.'; 'सर्वदैवापकृष्ट मन्यते भवद्भ्यो युधिष्ठिर ', 'सर्वदैवात्मानमपकृष्ट मन्यते भवद्भ्यो युधिष्ठिर.', 'सर्वमेवापकृत न मन्यते भवद्भ्यो युधिष्ठिर' इति नानाविध पाठ ४. 'कथमेवेति'. ५. 'वत्स' इति क्वचिन्नास्ति ६. 'सधारयामीति'. ७. 'अनुजनाश शङ्कमान '; 'अनुजनाशाच्छङ्कमान.'; 'अनुजनाशशङ्कया शङ्कमान.'. ८. 'यथैव भवते रोचते तथैवासौ शक्तः संधातुम्' इति बहुपुस्तकानां पाठ ९.'जाद' इति क्वचिन्नास्ति.

**दुर्योधनः**—तात, अम्ब, संजय,

एकेनापि विनानुजेन मरणं पार्थः प्रतिज्ञातवा-
न्भ्रातॄणां निहते शते विषहते[1] दुर्योधनो जीवितुम् ।
तं दुःशासनशोणिताशनमरिं भिन्नं[2] गदाकोटिना
भीमं दिक्षु न विक्षिपामि[3] कृपणः संधिं विदध्यामहम् ॥ ७ ॥

**गान्धारी**—हा जाद दुस्सासण, हा मदङ्कदुल्ललिद, हा जुअराअ, अस्सुदपुव्वा क्खु कस्स वि लोए ईदिसी विपत्ती। हा वीरसदप्पसविणी हदगान्धारी दुक्खसदं प्पसूदा । ण उण सुदसदम्[4] । (क)

(सर्वे रुदन्ति ।)

**संजयः**—(बाष्पमुत्सृज्य ।) तात, अम्ब[5], प्रतिबोधयितुं[6] महाराजमिमां भूमिं युवामागतौ । तदात्मापि[7] तावत्संस्तभ्यताम् ।

---

(क) हा जात दुःशासन, हा मदङ्कदुर्ललित, हा युवराज, अश्रुतपूर्वा खलु कस्यापि लोक ईदृशी विपत्तिः । हा वीरशतप्रसविनी हतगान्धारी दुःखशतं प्रसूता । न पुनः सुतशतम् ।

---

जेनेत्यत्र 'पृथग्विना–' इत्यादिना तृतीया । पार्थो युधिष्ठिर । विषहते शक्नोति। तथा च लज्जाकरेण मम जीवितेनालमिति भाव । शोणिताशिन रक्तभोजिनम्। भोजनपद लक्षणया पानेऽपि प्रवर्तत इहेत्यवधेयम्। कोटिरग्रम्। 'कोटिरग्रे प्रकर्षे च' इति धरणिः। अह भीम दिक्षु न विक्षिपामि । किं तु विक्षिपाम्येवेत्यर्थ । न शिरश्चालने। अह कृपण. सन्संधि विदध्यां करिष्ये । तथा च भीमवधादेव समीहितसिद्धिर्न तु संधिनेति भाव ॥७॥**गान्धारीवाक्ये**। हा जात दु शासन, हा युवराज, हा मदङ्कदुर्ललित, अश्रुतपूर्वा कस्यापि लोक ईदृशी विपत्ति । हा वीरशतप्रसविनि, हन्त गान्धारि, दु खशत प्रसूतासि । न पुन पुत्रशतम् ॥ सस्तभ्यतां स्थिरी-

---

१. 'अभिलषते'. २. 'भिन्दन्गदाकोटिभि.'. ३ 'विक्षिपत्यनुनय तस्मिन्विवत्ते कथम्' इति पाठ.. ४. 'हा जाद दुस्सासण, हा दुम्मरिसण, हा विकण्ण, हा वीरसदप्पसविणी गान्धारी दुक्खसद प्पसूदा। ण सुदसदम्' इति बहुपुस्तकाना पाठ. ५. 'अम्ब' इति क्वचिन्नास्ति. ६. 'समाश्वासयितु'. ७. 'तदात्मानमपि'; 'तदात्मैव'; 'तदात्मनैव'.

धृतराष्ट्रः—वत्स [1]दुर्योधन, एवं विमुखेषु भागधेयेषु [2]त्वयि चामुञ्चति सहजं मानमरिषु [3]त्वदेकशेषजीवितावलम्बनेयं तपस्विनी गान्धारी [4]कमवलम्बतां शरणमहं च ।

दुर्योधनः—श्रूयतां [5]यत्प्रतिपत्तुमिदानीं प्राप्तकालम् ।

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः ।
[6]अभिमुखमरीन्क्रुद्धान्घ्नन्तः हताः शतमात्मजा
वहतु सगरेणोढां तातो धुरं सहितोऽम्बया ॥ ८ ॥

[7]विपर्यये त्वस्याधिपतेरुल्लङ्घितः [8]क्षात्रधर्मः स्यात् ।

---

क्रियताम् ॥ तपस्विन्यनुकम्प्या । 'तपस्वी तापसे चानुकम्पार्हे च तपस्विनी' इति विश्व । त्वदेकशेषरूप जीविताशावलम्बन तद्योगिनी । न तु बहुव्रीहि कृत्वा मत्वर्थीय । तयोरेकेनैवापरस्य गतार्थत्वादित्यवधेयम् । 'किशरण' इति पाठे कि शरण यस्य स किशरण । अशरण इत्यर्थ । 'शरण गृहरक्षित्रो'' इत्यमर । अह सुवलम्ब इत्यन्वय (?)॥ प्रतिपत्तु कर्तुम् । **कलितभुवना इति**। कलितभुवना साधितलोका । 'कलिवलीकामधेनू' इति वैयाकरणा । हे तात, यतस्त्वात्मजा शत शतसख्याका हता अतोऽम्बया सह सगरेणोढां धुर तातो वहतु । यथा सगरस्य शत पुत्रा शत्रुणा हतास्तथा तवापीति भाव । कीदृशा । अभिमुख क्रुद्धाञ्शत्रून्घ्नन्तो नाशयन्त । इद विशेषण सगरसुतेष्वपि । एव कलितभुवना इत्याद्यपि । शतमात्मजा इति शतसख्याया एकवचनान्तेनैव शतशब्देनोक्तत्वादात्मजपदेन बहुवचनान्तेन च तदभिधानादन्वय । ऊढा धृताम् ॥ ८ ॥ क्षात्रवृत्ति क्षत्रियधर्म ॥ **गान्धारीवाक्ये** । जानीत किमिद

---

१. 'दुर्योधन' इति क्वचिन्नास्ति. २. 'त्वयि चामुञ्चति मानबन्धमरिषु' इत्यपि पाठः. ३. 'त्वदेकशेषजीविताशावलम्बनेयं' इति जगद्धरसमादृत. पाठ . ४. 'किमवलम्बता'. ५. 'यत्प्रतिपत्तुमिदानी प्राप्तकालम्' इति क्वचिन्नास्ति ६. 'अभिमुखमरीन्क्रोधाद्घ्नन्तो हता. शतमात्मजा.', 'अभिमुखमरीन्घ्नन्त. संख्ये हता शतमात्मजा' इति पाठौ. ७ 'विपर्यये तु समुल्लङ्घित' क्षात्रधर्म. स्यात्', 'विपर्यये त्वस्याधिपतेरुल्लङ्घित क्षत्रधर्म. स्यात्', ८. 'क्षात्रधर्म स्यात्' इत्यस्मादनन्तर क्वचित् 'धृतराष्ट्र.—वत्स, हित विधीयते न पुन. क्षात्रवृत्तिरियम्' इत्यधिक. पाठः समुपलभ्यते.

(नेपथ्ये महान्[१]कलकल ।)

**गान्धारी**—([२]आकर्ण्य । सभयम् ।) [३]जाद, कहि एदं हाहाकारमिस्सं [४]तूररसिदं सुणीअदि । (क)

**संजयः**[५]—अम्ब, भूमिरियमेवंविधानां भीरुजनत्रासजननी महानिनादानाम् ।

**धृतराष्ट्रः**—वत्स संजय, ज्ञायतामतिभैरवः खलु विस्तारी हाहारव । कारणेर्ना[६]स्य महता भवितव्यम् ।

**दुर्योधनः**—तात, प्रसीद । पराङ्मुखं खलु दैवमस्माकम् । यावदपरमपि किंचिदत्याहितं न श्रावयति ता[७]वदेवाज्ञापय मां स[८]ङ्ग्रामावतरणाय ।

**गान्धारी**—जाद, मुहुत्तअं दाव मं मन्दभाइणीं समस्ससेहि । (ख)

**धृतराष्ट्रः**—वत्स, यद्यपि भवान्समराय कृतनिश्चयस्तथापि [९]रह परप्रतीघातोपायश्चिन्त्यताम् ।

**दुर्योधनः**—

[१०]प्रत्यक्षं हतबान्धवस्य न परान्हन्तुं रथो मे क्षमः
किं वा तेन कृतेन तैरि[११]व कृतं यन्न प्र[१२]काश्यं रणे ।

---

(क) जात, कुत्रैतत् हाहाकारमिश्र तूर्यरसित श्रूयते ।
(ख) जात, मुहूर्त तावन्मा मन्दभाग्या समाश्वासय ।

---

हाहाकारविमिश्र तूर्यरसित श्रूयते ॥ अत्याहितमनिष्टम् ॥ **गान्धारीवाक्ये** । जात, मुहूर्तकमपि तावन्मामनाथा समाश्वासय। अत्र मुहूर्तकमित्यत्र स्वार्थे कः ॥ प्रतीघातो विनाशः ॥ **प्रत्यक्षमिति** । मम रथ परान्हन्तु न क्षम इत्यन्वय । तेन परप्रतीघातोपायेन । कृतेन वा किम् । किं तु न किमपि । तैरपि कर्म कृत

---

१. 'नादः'. २. '(श्रुत्वा। सभयम् ।)' इति क्वचित्पाठ. ३ 'सजअ, हाहाकारमिस्स'; 'सजअ, कि एद हाहाकारमिस्स' इति पाठौ. ४. 'समरतूररसिद', 'विमम तूररसिद', 'विसम रसिद' ५. 'सजय —अभूमिरियमेववियाना भीरुजनानाम् ।' इति पाठ . ६. 'अस्य' इति क्वचिन्नास्ति. ७ 'तावदेवानुमन्यस्व'. ८ 'सङ्ग्राम प्रति' ९. 'रह ' इति क्वचिन्नास्ति. १०. 'प्रत्यक्ष हतबान्धवा मम परे हन्तु न योग्या रह.' इति बहुपुस्तकाना पाठ.. ११. 'तैरिह ', 'तैरपि'. १२. 'प्रकाश'.

गान्धारी—जाद, एआइ तुमम्। को दे सहाअत्तणं करिस्सदि।(क)

दुर्योधनः—

एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः

साम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥ ९ ॥

(नेपथ्ये। कलकलानन्तरम्।)

भो भो योधाः, निवेदयन्तु भवन्तः कौरवेश्वराय, इदं महत्कदनं प्रवृत्तम्। अलमप्रियश्रवणपराङ्मुखतया। यतः कालानुरूपं प्रतिविधातव्यमिदानीम्। तथा हि।

त्यक्तप्राजनरश्मिरङ्कितधनुः पार्थाङ्कितैर्मार्गणै-

र्वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः।

(क) जात, एकाकी त्वम्। कस्ते साहाय्यं करिष्यति।

निष्फलं यद्रणे न आकार्येन बोधनीयम्। यदित्यत्र जात्यभिप्रायमेकवचनम्। 'तैरिव कृतम्' इति पाठे यथा तैः शत्रुभिः कृतं निष्फलं रणाप्रकाशनादित्यर्थः॥ गान्धारीवाक्ये। जात, एकाकी त्वम्। कस्ते साहाय्यं करिष्यति॥ हे मातरेकोऽहमद्वितीयः श्रेष्ठो वास्मि। कीदृशः। भवत्याः पुत्रनाशकरः। भवतीत्यत्र पुंवद्भावाभावः प्रियादिपाठात्। 'स्त्रियाः पुंवत्' इति योगविभागाद्वा। कियन्तोऽल्पाः। केवलं दैवमेव श्लाघ्यमस्तु। मेदिनी निष्पाण्डवास्तु॥ ९॥ यत्र क्रिया नास्ति तत्र कृभ्वस्तयो ग्राह्या इति व्युत्पत्तिः॥ कदनं पापं भीषणं वा। 'कदनं भीषणे पापे' इति विश्वः। त्यक्तेति। शल्यः शिबिरं यातीत्यन्वयः। किं कुर्वन्। कुरून्कुरुबलानि शल्ययन्दुःखितानि कुर्वन्। कीदृशः। त्यक्तौ प्राजनरश्मी येन स तथा। प्राजनं 'पएना' इति ख्यातम्। 'प्राजनं तोदनं तोत्रम्' इत्यमरः। रश्मिर्वल्गा। मार्गणैर्बाणैः। 'पृषत्कमार्गणशराः' इत्यमरः। वाहैः शनैर्मन्दमाकृष्यमाणः। स्यन्दनवर्त्मनां परिचयाद्रथमार्गानुसंधानात्। पृच्छतां जनानां

१. 'ता जाद'. २. 'कोवि दे'. ३. 'नन्वेकः'. ४. 'साह्य केवलमेतु दैवमधुना', 'शाम्यं केवलमेतु दैवमधुना'; 'सह्यं केवलमेतदेवमधुना', 'श्लाघ्यं केवलमस्तु दैवमधुना' इति पाठान्तराणि ५. 'जनाः'. ६. 'एतन्महत्कदनं संवृत्तम्' इति क्वचित्पाठः. ७. 'अलमिदानीमप्रियश्रवणपराङ्मुखतया। यतः कालानुरूपं प्रतिविधानव्यम्।' इति पाठः. ८. 'विधातव्यम्' ९. 'न्युब्जप्रोज्झितरश्मिरङ्कितततनुः'; 'त्यक्तप्राजनरश्मिरङ्कितततनुः'. १०. 'स्यन्दनवर्त्मनः'; 'स्यन्दनवर्त्मना'.

वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां
शून्येनैव रथेन याति शिबिरं शल्यः कुरूञ्शल्ययन् ॥ १० ॥

**दुर्योधनः**—(श्रुत्वा । साशङ्कम् ।) आः, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । कः कोऽत्र भोः ।

(प्रविश्य सम्भ्रान्तः)

**सूतः**—हा, हताः स्मः । (इत्यात्मानं पातयति ।)

**दुर्योधनः**—अयि, कथय ।

**धृतराष्ट्रसंजयौ**—कथ्यतां कथ्यताम् ।

**सूतः**—आयुष्मन्, किमन्यत् ।

शल्येन यथा शल्येन मूर्छितः प्रविशता जनौघोऽयम् ।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥ ११ ॥

**दुर्योधनः**—हा वयस्य कर्ण । (इति मोहमुपागतः ।)

---

कुर्वन्नङ्गपतेर्वार्तां नेत्रजलैरावेदयन्कथयन् । तथा च कर्णो मृत इति रोदनेनैव सूचितमिति भावः ॥ १० ॥ अशनिर्वज्रम् । उभयं क्रियाविशेषणम् । उद्घोषितमुच्चैः शब्दः कृतः ॥ स्मो भवामः ॥ **शल्येनेति** । हे देव, अयं जनौघः शल्येन राज्ञा हेतुभूतेन मूर्च्छितोऽस्ति । कीदृशेन । प्रविशता । अर्थाज्जनौघमेव । कर्णस्य रथमधिरूढेन च । यथा शल्येनास्त्रविशेषेण मूर्च्छितो जनौघो भवति । कीदृशं रथम् । मनोरथमिव । शून्यमित्यर्थः । आर्याच्छन्दः ॥ ११ ॥ **गान्धारीवाक्ये** ।

---

१. 'पृच्छते' २. 'कम्पयन्'. ३. 'दुर्यो०—(आकर्ण्य । सभयम् ।) आः, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । कः कोऽत्र भोः', दुर्यो०—(श्रुत्वा । साशङ्कम् ।) आः, केनैतदविस्पष्टमशनिपातदारुणमुद्घोषितम् । कः कोऽत्र भोः', 'दुर्यो०—(श्रुत्वा । सशङ्कम् ।) सूत, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । ज्ञायताम् । कोऽत्र भोः'; 'दुर्योधन.—(श्रुत्वा । साशङ्कम् ।) सूत, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । ज्ञायताम् । कः कोऽत्र भोः', 'राजा—आः, किमेवमविस्पष्टमशनिनिर्घातदारुणमुद्घोषितम् । कः कोऽत्र भोः' इति पाठान्तराणि. ४ 'हतोऽस्मि' ५. '(इत्यात्मानमपातयत् ।)' इति बहुपुस्तकानां पाठः. ६. 'कथय कथय' इति पाठः. ७. 'धृतराष्ट्रसंजयौ—कथ्यतां कथ्यताम्' इति क्वचिन्नास्ति. ८ 'आयुष्मन्, किमन्यत्' इत्यत्र 'कथयामि किं देव' इति क्वचित्पाठः. ९. 'स्वल्पेन'. १०. 'आरूढेन'. ११. 'हा वयस्य, हा कर्ण' इति क्वचित्पाठः. १२. '(इति मोहं गतः ।)' इति पाठः.

**गान्धारी**—जाद, समस्सस समस्सस । (क)

**संजयः**—[1]समाश्वसितु समाश्वसितु देवः ।

**धृतराष्ट्रः**—भोः, कष्टं कष्टम् ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।
[2]वत्सस्य च सुहृच्छूरो राधेयः सोऽप्ययं हतः ॥ १२ ॥

वत्स, समाश्वसिहि समाश्वसिहि । [3]ननु भो हतविधे,

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाहम् ।
[4]अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता नि[5]राशः ॥ १३ ॥

[6]वत्स दुर्योधन, समाश्वसिहि समाश्वसिहि । समाश्वासय तपस्विनीं मातरं च ।

**दुर्योधनः**—(लब्धसञ्ज्ञः ।)

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।

---

(क) जात, समाश्वसिहि समाश्वसिहि ।

---

जात, समाश्वसिहि समाश्वसिहि॥ **अन्ध इति**। अशेषितो विनष्टः। विरामो निरस्तता। 'निराशः' इति पाठे आशाशून्य ॥१३॥ **अयीति**। त्वं मे कर्णसुखदामित्यन्वय । हे कर्ण, मयि गिरं प्रयच्छ। कीदृश । मयि स्थिरां मुदमुद्गिरन्निव। इत्येकोऽन्वय ।

१. 'समाश्वसितु समाश्वसितु महाराज.', 'समाश्वसिहि समाश्वसिहि महाराज' इति पाठौ. २. 'वत्सस्य मे सुहृच्छूर.', 'पुत्रस्य मे सुहृत्प्रेयान्', 'वत्सस्य मे सुहृत्प्रेयान्' इति पाठान्तराणि ३.'ननु भो हतविधे भरतकुलविमुख'; 'भो हतविधे'; 'भगवन्विधे' इति पाठान्तराणि. ४. 'निःशेषिताखिलसुहृद्गुरुबन्धुवर्गः' इति पाठ. ५. 'विरामः'. ६ 'वत्स दुर्योधन, समाश्वासय तपस्विनी मातरम्', 'वत्स समाश्वसिहि समाश्वासय चात्मानम्' इति पाठौ.

[1]संततावियुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल विहाय यासि माम् ॥ १४ ॥

([2]पुनर्मोहमुपागतः ।)

(सर्वे [3]समाश्वासयन्ति ।)

**दुर्योधनः**—
मम प्राणाधिके तस्मिन्[4]अङ्गानामधिपे हते
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा ॥ १५ ॥

अपि च ।
शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना [5]न च बन्धुवर्गम् ।
येनातिदुःश्रवमसाधु [6]कृतं तु कर्णे
कर्तास्मि तस्य निधनं समरे कुलस्य ॥ १६ ॥

**गान्धारी**—जाद, सिढिलेहि दाव क्खणमेत्तं बाप्पमोक्खम् । (क)

**धृतराष्ट्रः**—वत्स, [7]क्षणमात्रं परिमार्जयाश्रूणि ।

---

(क) जात, शिथिलय तावत्क्षणमात्र बाष्पमोक्षम् ।

---

द्वितीयस्तु । हे कर्ण, मे मम कृते कर्णसुखदा गिर प्रयच्छ । मुदमुद्गिरन्निव । त्वमिति शेष । अकृताप्रिय न कृतमप्रिय यस्य तम् । प्रिय मित्रम् । वृषसेनो वत्सलो यस्य स तथा ॥१४॥ **ममेति** । तस्मिन्नङ्गानामधिपे हते सत्युच्छ्वसन्नप्यहं लज्जे । श्वासावधारणेऽपि लज्जा करोमि । का कथा । अपि तु न कापि ॥१५॥ **शोचामीति** । शोच्य शोचनार्हम् । येन कर्णेन मम कर्णेऽसाध्वयोग्यमतिदुःश्रवमत्यर्थदुःखश्राव्य वचो न कृत तस्य कर्णस्य निधने सति मम कुलस्य निधन विनाशइत्यर्थ । दुःश्रवमिति विशेषणद्वारा विशेष्यलाभ । 'ईषद्दु सुषु–'इत्यादिना खल् ॥ १६ ॥ **गान्धारीवाक्ये** । जात, शिथिलय तावत्क्षणमात्र बाष्पमोक्षम् ।

---

१ 'सततावियुक्तमकृताप्रिय कथं'; 'अनुजैर्वियुक्तमकृताप्रिय प्रिय' इति पाठौ. २. '(इति पुनर्मोहमुपगत. ।)'. ३. 'आश्वासयन्ति'. ४. 'अङ्गानामीश्वरे गते'; 'अङ्गानामीश्वरे हते' इति पाठौ. ५. 'हतबन्धुवर्गम्' इति क्वचित्पाठः. ६. 'कृत न कर्णे कर्णस्य तस्य निधने निधनं कुलस्य' इति जगद्धरसमादृत. पाठ., 'कृत च कर्णे कर्तास्मि तस्य निधन समरे कुलस्य' इत्यपि क्वचित्पाठ . ७ 'क्षणमेक त्यजाश्रूणि' इति क्वचित्पाठः.

**दुर्योधनः**—

मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारितः ।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते ॥ १७ ॥

सूत, केनैतदसंभवनीयमस्मत्कुलान्तकरणं कर्म कृतं स्यात् ।

**सूतः**—आयुष्मन्, एवं किल जनः कथयति ।

भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य ।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य ॥ १८ ॥

**दुर्योधनः**—

कर्णाननेन्दुस्मरणात्क्षुभितः शोकसागरः ।
वाडवेनेव शिखिना पीयते क्रोधजेन मे ॥ १९ ॥

तात, अम्ब, प्रसीदतम् ।

ज्वलनः शोकजन्मा माममयं दहति दुःसहः ।
समानायां विपत्तौ मे वरं संशयितो रणः ॥ २० ॥

---

अत्र मोक्षस्त्याग ॥ **मामिति** । न निवारितो य इति शेष । तत्कृते त लक्ष्यीकृत्याश्रूणि त्यजतो मे कि वार्यते । न वारयितुमर्हतीति भाव ॥ १७ ॥ असंभावनीय दुष्करम् ॥ **भूम्यामिति** । किल प्रसिद्धौ । तस्येन्द्रसूनोरर्जुनस्य शरै स कर्णो निहत । कीदृश । भूमौ निमग्नरथाङ्ग ।'चक्र सैन्यरथाङ्गयो' इति विश्व । चक्रायुध कृष्ण । कृतान्तो यम ॥ १८ ॥ **कर्णेति** । वाडवेन वडवाजातेन । शिखिनाग्निना ॥ १९ ॥ **ज्वलन इति** । समानाया तुल्याया दाहमरणयोर्विपदि सत्याम् । सशयितोऽपि जये भङ्गे च सदिग्धोऽपि । रणो वर श्रेष्ठ इत्यर्थः । वर-

---

१. 'केनापि न स वारित.'; 'केनचिन्न स वारितः' २. 'सूत, केनेदमसभावितमस्मत्कुलान्तकर कर्म कृत स्यात्'; 'धृतराष्ट्रः—'केनेदमसभावितमस्मत्कुलान्तकर कर्म कृतम्' इति पाठौ. ३. 'आयुष्मन्' इति क्वचिन्नास्ति. ४. 'भूम्या निमग्नचक्रस्तु स चक्रायुधसारथेः । सख्ये किल हतो बाणैरस्मत्सेनान्तकारिण. ॥' इति पुस्तकान्तरे पाठः. ५ 'दुर्योधन.—कष्ट भोः कष्टम् । कर्णाननेन्दुस्मरणात्' इति क्वचित्पाठ.. ६. 'अम्ब, तात, प्रसीदतम्' इति क्वचित्पाठः ७. 'शोकज्वलनजन्मा मां तापो दहति दु.सह.' इति क्वचित्पाठ.. ८. 'वर सशयितु रणे', 'वर संशयन रणे'; 'वर सशयतो रण.' 'वर सशयतो रणम्' इति पाठान्तराणि.

**धृतराष्ट्रः**—([1]दुर्योधनं परिष्वज्य रुदन्।)

[2]भवति तनय लक्ष्मीः साहसेष्वीदृशेषु
[3]द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम्।
[4]अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
[5]छलबहुलमरीणां सङ्गरं हा हतोऽस्मि॥ २१॥

**गान्धारी**—[6]जाद, तेण एव्व सुदसदकदन्तेण [7]विओदरेण समं समरं मग्गसि। (क)

**दुर्योधनः**—[8]तिष्ठतु तावद्वृकोदरः।

पापेन येन [9]हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः।
पुत्रस्तवाम्ब तव तात [10]नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु॥ २२॥

---

(क) जात, तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे।

---

शब्दो मनागर्थे वा॥ २०॥ **भवतीत्यादि**। हे तनय पुत्र। ईदृशेषु साहसेषु लक्ष्मीर्भवति। तदुक्तम्—'न साहसमनारुह्य नरो भद्राणि पश्यति' इति। द्रवति चपलं भवति। भीमं भयानकम्। उत्प्रेक्ष्य विचिन्त्य। हे मानशौण्डाभिमानख्यात। ते चेष्टितमनिकृतिनिपुणं परक्षेपाकुशलं परभर्त्सनाकुशलं वा। अस्तीति शेषः। 'निकृतिर्भर्त्सने क्षेपे' इति विश्वः। अरीणां सङ्गरं युद्धं छलबहुलमस्ति। अतो हा कष्टम्। हतोऽस्मि॥ २१॥ **गान्धारीवाक्ये**। जात, तेनैव सुतशतकृतान्तेन वृकोदरेण सह समरं प्रार्थयेथाः॥ **पापेनेति**। हे अम्ब, तव पुत्रः कर्णः। हे तात, तव नयैकशिष्यः कर्णः। येन पापेन हत इत्यन्वयः॥ २२॥

---

१. '(दुर्योधनं परिष्वज्य।)', '(पुत्रं परिष्वजन् रुदन्।)' इति पाठौ. २. 'भवति तनय सत्यं संशयः साहसेषु' इति बहुपुस्तकानां पाठः. ३. 'दहति हृदयमेतत्'; 'द्रवति च हृदयं मे'. ४. 'अनिकृतनिपुणं'; 'प्रतिकृतिनिपुणं'. ५. 'छलबहुलम्'. ६. 'जाद' इति क्वचिन्नास्ति. ७. 'विओदलहदएण'. ८. 'अवतिष्ठतु'; 'अम्ब, तिष्ठतु'. ९. 'हृदयस्थमनोरथः'. १०. 'ममैकमित्रं' इति क्वचित्पाठः.

सूत, अलमिदानीं कालातिपातेन । सज्जं मे रथमुपाहर[1] । भयं चेत्पाण्डवेभ्यस्तिष्ठ[2] । गदामात्रसहाय एव समरभुवमवतरामि[3] ।

**सूतः**—अलमन्यथा संभावितेन । अयमहमागत एव[4] । (इति निष्क्रान्तः ।)[5]

**धृतराष्ट्रः**—वत्स दुर्योधन, यदि स्थिर एवास्मान्दग्धुमयं ते[6] व्यवसायस्तत्संनिहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

**दुर्योधनः**—नन्वभिषिक्त एव[7] ।

**गान्धारी**—जाद[8], कदरो उण सो जस्सि आसं ओलम्बिस्सम्[9] ।(क)

**धृतराष्ट्रः**—[10]किं वा शल्य उत वाश्वत्थामा ।

**संजयः**[11]—हा कष्टम् ।

[12]गते भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजञ्शल्यो जेष्यति पाण्डवान् ॥ २३ ॥

**दुर्योधनः**—[13]किं वा शल्येनोत वाश्वत्थाम्ना ।

---

(क) जात, कतरः पुनः स यस्मिन्नाशामवलम्बिष्ये ।

---

अतिपातोऽतिक्रमः ॥ **गान्धारीवाक्ये** । जात, कतर स यस्मिन्नाशासमवलम्बिष्ये । अत्र कतरः क इत्यर्थः । आशां प्रत्याशाम् ॥ **गत इति** । गते शरशय्यामिति शेषः । विनिपातिते घातिते ॥ २३ ॥ **कर्णेति** । अयं ममात्मा

---

१. 'उपहर'. २ 'त्वं चेद्बिभेषि पाण्डवेभ्यः', 'त्वं चेद्बिभ्यत्पाण्डवेभ्यः'. ३. 'समर' ४. 'अयमहमागतोऽस्मि'; 'अयमागतोऽस्मि' इति पाठौ ५ '(इति निष्क्रान्तः ।)' इत्यस्मादनन्तरं '(नेपथ्ये कलकलः ।) दुर्योधनः—अनुमोदध्वमनुमोदध्वम् । पराङ्मुखोऽस्माकं विधिः' इति क्वचिदधिकः पाठः समुपलभ्यते. ६. 'यदि स्थिर एवायं निश्चयस्तद्यथा संनिहितेषु', 'यदि स्थिर एष ते समराध्यवसायस्तद्यथा संनिहितेषु' इति पाठौ. ७ 'एवेति'. ८. 'जाद' इति क्वचिन्नास्ति ९. 'जस्सि आसा अवलम्बीअदु'; 'जहिं एदं हदासं ओलम्बिस्सम्' इति पाठौ. १० 'किं शल्योऽथवाश्वत्थामा वा' इति क्वचित्पाठः ११ 'संजयः—हा कष्टम्' इत्यस्मादारभ्य 'शल्यो जेष्यति पाण्डवान्' इत्यन्तं पुस्तकान्तरे नास्ति. १२. 'हते' १३ 'किं वा शल्येनोत वाश्वत्थाम्ना' इति पाठः क्वचिन्नास्ति.

कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।
अनिवारितसंपातैरयमात्माश्रुवारिभिः ॥ २४ ॥

(नेपथ्ये कलकलं कृत्वा ।)

भो भोः कौरवबलप्रधानयोधाः, अलमस्मानवलोक्य भयादितस्ततो गन्तुम् । कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति ।

(सर्वे ससभ्रममाकर्णयन्ति ।)

(प्रविश्य सभ्रान्त )

**सूतः**—आयुष्मन्,

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।

**सर्वे**—कश्च कश्च ।

**सूतः**—

स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥ २५ ॥

**गान्धारी**—(सभयम् ।) जाद, किं एत्थ पडिपज्जिदव्वम् । (क)

**दुर्योधनः**—ननु संनिहितैवेयं गदा ।

**गान्धारी**—हा हदम्हि मन्दभाइणी । (ख)

---

(क) जात, किमत्र प्रतिपत्तव्यम् ।

(ख) हा हतास्मि मन्दभागिनी ।

---

कर्णालिङ्गनदायी कर्णानुयायीत्यर्थ । अश्रुवारिभिर्लक्षित । लक्षणे तृतीया । कीदृशै । अनिवारितासारै । 'धारासपात आसार ' इत्यमर । तथा च मर्तव्य वा मयार्जुनवधो वा कर्तव्य इति भाव ॥ २४ ॥ इतस्तत सर्वत्र ॥ **प्राप्ताविति ।** कर्णारिरर्जुन । वृको 'हुण्डार' इति ख्यात । तद्वद्युद्धकर्म यस्य स वृककर्मा । वृको मृगविशेषो वा । 'कोक स्त्वीहामृगो वृक ' इत्यमर । 'वृको मृगे तथोरगे' इति धरणि ॥ २५ ॥ **गान्धारीवाक्ये ।** जात, किमत्र कर्तव्यम् । 'प्रतिपत्तव्यम्' इत्यपि पाठ ॥ हा हतास्मि

---

१. 'अस्रवारिभि.'. २. '(नेपथ्ये कलकलं कृत्वा ।)' इत्यत्र '(नेपथ्ये ।)' इति क्वचित्पाठ.. ३. 'गमनेन' इति क्वचित्पाठ. ४ 'सर्वे—कश्च ।' इति क्वचित्पाठ . ५. 'कर्णस्यारि '. ६ 'भीमकर्मा'. ७. 'एत्थ सपद पडिपज्जिदव्वम्', 'एत्थ कादव्वम्'. ८. 'अम्ब, ननु'. ९. 'हा हदम्हि अह मन्दभाइणी'; 'हा हदम्हि सपद पावा' इति पाठौ.

**दुर्योधनः**—[1]अम्ब, अलमिदानीं कार्पण्येन। [2]संजय, रथमारोप्य पितरौ शिबिरं [3]प्रतिष्ठस्व। [4]समागतोऽस्माकं शोकापनोदी जनः।

**धृतराष्ट्रः**—वत्स, क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे[5]।

**दुर्योधनः**—तात, किमनेनोपलब्धेन[6]।

(ततः प्रविशतो भीमार्जुनौ[7]।)

**भीमः**—भो भोः [8]सुयोधनानुजीविनः, [9]किमिति संभ्रमादयथायथं चरन्ति भवन्तः। [10]कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः। [11]अलमावयोः शङ्कया।

कर्ता द्यूतच्छलानां [12]जतुमयशरणोद्दीपनः सो[13]ऽभिमानी
कृष्णाकेशोत्तरीय[14]व्यपनयनमरुत्पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत [15]न रुषा द्रष्टुमभ्यागतौ स्वः॥२६॥

**धृतराष्ट्रः**—संजय, दारुणः [16]खलूपक्षेपः पापस्य।

---

मन्दभागिनी॥ प्रतीक्षस्व क्षमस्व। अनयोर्भीमार्जुनयोः। भावमभिप्रायम्॥ अयथायथमितस्ततः। **कर्तेति**। असौ स दुर्योधनः क्वास्ते तत्कथयत। रुषा न द्रष्टुं नाभ्यागतौ स्वः। सदनं गृहम्। व्यपनयनं दूरीकरणम्। मरुद्वातः। मित्रं स इत्यत्र मित्रशब्दस्याजहल्लिङ्गतयान्वयः॥ २६॥

---

१. 'अम्ब' इति क्वचिन्नास्ति २. 'संजय, संजय' इति बहुपुस्तकानां पाठः. ३. 'प्रस्थापय', 'प्रवेशय', 'प्रति प्रवेशय' ४ 'आप्तोऽस्मच्छोकापनोदप्रणयी जनः' इति बहुपुस्तकानां पाठः ५. 'उपलभामहे'. ६. 'उपलब्धेन। तद्गम्यताम्।', 'उपलम्भेन। तद्गम्यताम्। (धृतराष्ट्रो गान्धारी च किंचिद्गत्वा तिष्ठतः।)' इति पाठौ ७ 'रथारूढौ भीमार्जुनौ'. ८ 'सुयोधनानुजीविनो योधाः' इति क्वचित्पाठः ९. 'किमिति संभ्रमात्संचरन्ति भवन्तः', 'किमिति ससंभ्रममयथायथं संचरन्ति भवन्तः', 'किमिति ससंभ्रममयथातथं संचरन्ति भवन्तः' इति पाठान्तराणि १० 'कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः' इति पाठः केषुचित्पुस्तकेषु नास्ति ११. 'अलमावयोः शङ्कया' इति क्वचिन्नास्ति. १२. 'जतुमयसदनोद्दीपनः' १३ 'अतिमानी'. १४ 'व्यपनयनपटुः' इति बहुभिः प्राचीनैः समादृतः पाठः १५ 'न रुषा' इत्यत्र 'पुरुषा' इति क्वचित्पाठः. १६. 'खल्वाक्षेपः पापस्य', 'खलु प्रक्षेपः पापयोः'.

**संजयः**—तात, कर्मणा[1] कृतनिःशेषविप्रियाः संप्रति वाचा व्यवस्यन्ति ।

**दुर्योधनः**—सूत, कथय[2] गत्वो[3]भयोरयं तिष्ठतीति ।

**सूतः**—यथाज्ञापयति[4] देवः । (तावुपसृत्य ।)[5] ननु[6] भो वृकोदरार्जुनौ, एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्ट-

**अर्जुनः**—आर्य, प्रसीद । न युक्तं पुत्र[8]शोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम् । तद्गच्छावः ।

**भीमः**—मूढ[9], अनुल्लङ्घनीयः[10] सदाचारः[11] । न युक्तमनभिवाद्य गुरू[12]न्गन्तुम् । (उपसृत्य ।) संजय, पित्रोर्नमस्कृतिं श्रावय । अथवा[13] तिष्ठ । स्वयं विश्राव्य नामकर्मणी वन्दनीया गुरवः ।

**अर्जुनः**—(उपगम्य[14] ।) तात, अम्ब,

> सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
> तृणमिव परिभूतो यस्य गर्वेण लोकः ।

---

उद्वेजयितुमित्यत्र ण्यन्तत्वाद्गुण ॥ सदाचारः शिष्टाचारः । 'समुदाचार.' इति पाठे सद्व्यवहार इत्यर्थ. । नमस्कृतिं नमस्कारम् ॥ **सकलेति** । वां पितरावयं मध्यम·

---

१. 'कृतनि.शेषविप्रियौ सप्रति वाचा व्यवस्यत.', 'कृतनि.शेषेऽपि सप्रति विप्रिय वाचा व्यवस्यन्ति' इति पाठौ. २ 'ब्रूहि' ३ 'गत्वानयोरय महाराजस्तिष्ठतीति' इति क्वचित्पाठः. ४. 'यथाज्ञापयसि'; 'यथाज्ञापयसि देव' इति पाठौ. ५. '(इति तावुपसृत्य ।)'. ६. 'ननु' इति क्वचिन्नास्ति. ७. 'तिष्ठतीति'. ८. 'पुत्रशोकपीडितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुम्', 'पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुम्'; 'पुत्रशोकपीडितौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम्' इति पाठान्तराणि. ९. 'मूढ' इत्यत्र 'पण्डितमन्य'; 'अयि पण्डित' इति पाठौ. १०. 'अलङ्घनीय.'. ११. 'समुदाचार.'. १२. 'स्वगुरु'. १३. 'अथवा तिष्ठ । स्वयमेव श्रावयाव. । (इति रथादवतरतः ।) भीम.—विश्राव्य स्वकर्म नाम च वन्दनीया गुरवः' इति बहुपुस्तकाना पाठः. १४. '(उपसृत्य ।)'.

रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः[1] पाण्डवोऽयम् ॥ २७ ॥

भीमः—

चूर्णिता[2]शेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसा[3]ञ्चति ॥ २८ ॥

धृतराष्ट्रः—दुरात्मन्[4]वृकोदर, न खल्विदं भवतैव केवलं सपत्नानामपकृतम् । यावत्क्षेत्रं[5] तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ।

भीमः—तात, अलं[6] मन्युना ।

कृष्णा[7] केशेषु कृष्टा तव सदसि पुरः[8] पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृशशलभ[9]कुलावज्ञया येन[10] दग्धाः ।
एतस्मा[11]च्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पा-
त्पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव[12] ॥ २९ ॥

दुर्योधनः—अरे रे मरुत्तनय, किमेवं वृद्धस्य राज्ञः पुरतो[13] निन्दितव्य[14]मात्मकर्म श्लाघसे । अपि च ।

---

पाण्डवोऽर्जुनः प्रणमति । 'वाम्' इति द्वितीयाद्विवचनान्तम् ॥ २७ ॥ **चूर्णितेति** । क्षीबो मत्तः । भङ्क्ता भङ्गकर्ता ॥ २८ ॥ अपकृतमपकारः कृतः । वीरा जयिनो हताश्च भवन्तीति क्षात्रधर्मोऽयम् । विकत्थनोपहासः ॥ **कृष्णेति** । पुरः । पाण्डवानामेव । पाण्डवानां वधूः कृष्णा । ते सर्वेऽनेनार्जुनेन दग्धा इत्यन्वयः । कृशः यच्छलभकुलं तद्वदवज्ञयापमानेनेत्यर्थः । तेनाहं त्वां श्रावये । खलु निश्चये । न भुजबलश्लाघया श्रावये । नापि दर्पाच्छ्रावये ॥ २९ ॥ **कृष्टेति** । तव भीमस्य । तव

१. 'मध्यमः पाण्डुपुत्रः'; 'फाल्गुनः पाण्डवोऽयम्' इति पाठौ. २. 'निहताशेषकौरव्य'. ३. 'शिरसा नतः'. ४. 'दुरात्मन्वृकोदर, मा तावद्विकत्थयात्मानम् । न खल्विदं' इति केचित्. ५. 'क्षात्रं'. ६. 'अलमलं मन्युना', 'अलमिदानीं मन्युना'. ७. 'कृष्टा केशेषु कृष्णा' इत्यपि पाठः. ८ 'वधूः'. ९. 'कृतशलभकुलावज्ञया'. १०. 'तेन', 'अनेन'. ११. 'तात त्वां श्रावयेऽहं' इति क्वचित्पाठः. १२. 'भवत्त्वम्'. १३. 'पुरः'. १४. 'अतिनिन्दितव्यमपि', 'निन्दितमपि'.

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं [1]भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन्वैरानुबन्धे [2]वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्[3]वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव [4]दर्पः ॥ ३० ॥

(भीमः क्रोधं नाटयति ।)

[5]अर्जुनः—आर्य, प्रसीद प्रसीद । किमत्र क्रोधेन ।
अप्रियाणि [6]करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य [7]का व्यथा ॥ ३१ ॥

भीमः—अरे रे [8]भरतकुलकलङ्क,
[9]अत्रैव किं न विशसेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन् ।
विघ्नं [10]गुरुर्न कुरुते यदि [11]मत्कराग्र-
निर्भिद्यमानरणि[12]तास्थनि ते शरीरे ॥ ३२ ॥

---

चार्जुनस्य । तस्य राज्ञो युधिष्ठिरस्य । तयोर्नकुलसहदेवयोः । एतेषां प्रत्यक्षं भूपतीनां च प्रत्यक्षम् । अनुबन्धे प्रकरणे । ये नरेन्द्रा हतास्तैः किमपकृतमि-त्यन्वयः । द्रविणं धनम् ॥ ३० ॥ **अप्रियाणीति ।** एष वाचाप्रियाणि करोति । कर्मणा न शक्तोऽसमर्थ इत्यन्वयः । यद्वा । अशक्त एष वाचाप्रियाणि करोति न कर्मणेत्यन्वयः । 'प्रलापोऽनर्थकं वचः' इत्यमरः ॥ ३१ ॥ **अत्रैवेति ।** अहं भवन्तं किमत्रैव न विशसेयं न विनाशयामि । यदि ते शरीरे गुरुर्विघ्नं न कुरुत-इत्यन्वयः । विशसेयमिति 'शसु हिंसायाम्' लिङि उत्तमपुरुषैकवचने रूपम् । कटुप्रलापिन् हे । कीदृशे शरीरे । मत्कराग्रैर्निर्भिद्यमानान्यत एव रणितानि शब्दितान्यस्थीनि यत्र तादृशे । 'कीकसं कुल्यमस्थि च' इत्यमरः ॥ ३२ ॥

---

१. 'क्षमापतीनां'. २. 'तव किमपकृतं', 'कथमनपकृतं' इति पाठौ. ३. 'वीर्या-तिसार–', 'वीर्यातिसार–'. ४. 'दर्पः' इत्यस्मादनन्तरं 'आः दुरात्मन्, एष न भवसि । (इति सक्रोधमुत्थाय हन्तुमिच्छति । धृतराष्ट्रो धृत्वोपवेशयति ।)' इत्यधिकः पाठो बहुपुस्तकेषु दृश्यते. ५. 'अर्जुनः—(निवारयन् ।) आर्य, प्रसीद प्रसीद । किमत्र क्रोधेन ।', 'अर्जुनः—आर्य, किमत्र क्रोधेन' इति पाठौ. ६ 'करोत्येव'. ७. 'कया'. ८. 'भरतकुलेन्दुकलङ्क'. ९ 'अत्रैव किं न विसृजेयम्'; 'अद्यैव किं न विसृजेयम्' इति पाठौ. १०. 'गुरू न कुरुतः'. ११. 'मद्गदाग्र–', 'मद्गदाग्रैः'. १२. 'अस्थिनि'.

अन्यच्च मूढ,

शोकं[1] स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने[2] यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः कारणं[3] जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ ३३ ॥

**दुर्योधनः**—दुरात्मन्, भरतकुलापसद[4], पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः । किं तु

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां[5] रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम्[6] ॥ ३४ ॥

**भीमः**—(विहस्य ।) यद्येव[8] नाश्रद्धेयो भवान् । तथापि प्रत्यासन्नमेव कथयामि ।

---

**शोकमिति** । शोकैर्यथा स्त्री रुदति तथा यत्त्व नयनसलिल त्याजितोऽसि । 'शोकम्' इति पाठे नेत्रजलैर्यथा स्त्री शोक त्याज्यते तथा त्वमपि त्याजित इत्यर्थ । यथा स्त्री रुदित्वा शोक त्यजति तथा त्वयापि कृतमिति भाव । भीमसेने क्रुद्धे सति तव कुनृपस्य जीवितस्यैतत्कारणमासीद्यद्रोदन भ्रातृवधदर्शनं च नाम । उभय चेद्वृत्त तदा मया त्वमपि घातयितव्य इति भाव. ॥ ३३ ॥ **द्रक्ष्यन्तीति** । न चिरादचिरम् । श्रेणिका परपरा । 'वेणिका' इति पाठे वेणिका प्रवाह. । 'वेणी तु केशवेशे सात्प्रवाहेऽपि निगद्यते' इति धरणि । अत एव त्रिवेणीति । 'कणिका' इति पाठस्तु सुगम एव । सैव भयानकालकरण यत्र तम् । नृणा पुर इति शेष. ॥ ३४ ॥ **पीनाभ्यामिति** । श्व. 'कल्लि' । 'द्यो गतेऽ-

---

१. 'शोकै. स्त्रीवन्नयनसलिल', 'शोक स्त्रीवन्नयनसलिल' इति पाठौ. २. 'विदलने'. ३ 'कारणा'. ४. 'भरतकुलाधम, द्यूतदास, पाण्डवपशो', 'भरतकुलापसद, द्यूतदास, पाण्डवपशो' इति पाठौ. ५. 'पाण्डवास्त्वा रणाजिरे' इति पाठः. ६ 'असृग्वेणिकाभीमभूषणम्', 'अस्थिवेणिकाभङ्गभीषणम्'. ७. 'श्रेणिका' इति जगद्धरसमतः पाठ ; 'कणिका' इत्यपि पाठो जगद्धरेण कथितः. ८. 'यद्येव न श्रद्धेयो भवास्तथापि प्रत्यासन्नमेव कथयामि', 'यदि न श्रद्दधते तदा प्रत्यासन्नमेव कथयामि'; 'यद्येव श्रद्धत्ते भवास्तदा प्रत्यासन्नमेव कथयामि' इति पाठान्तराणि.

पीनाभ्यां मद्भुजाभ्यां [1]भ्रमितगुरुगदाघातसंचूर्णितोरोः
क्रूरस्याधायपादं तव शिरसि नृणां पश्यतां श्वः प्रभाते ।
[2]त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेना[3]नखाग्रं
[4]स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥३९॥

(नेपथ्ये ।)

भो भो भीमसेनार्जुनौ, [5]एष खलु निहताशेषा[6]रातिचक्र [7]आक्रान्तपरशुरामाभिरामयशाः [8]प्रतापतापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

**उभौ**—किमाज्ञापयत्यार्यः ।

(पुनर्नेपथ्ये ।)

[9]कुर्वन्त्वाप्ता हतानां रणशिरसि [10]जना वह्निसाद्देहभारा-
[11]नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।

---

नागतेऽह्नि श्वः' इत्यमर । अनेन चन्दनेनाहमक्त. सबद्ध । स्वय भीमं भूषणमनुभवितास्मि । त्व मुख्यो यत्र तादृश यद्भ्रातृचक्र तस्योद्दलनेन खण्डनेन यद्गलत्स्रवदसृग्रक्तं तदेव चन्दन तेन । मुख्येत्यनेन तस्यापि वध सूचित । तथा च त्वदादिसर्वभ्रातृवध इति भाव' । स्त्यानेन पिण्डीभूतेन । आनखाग्रा-न्नखाग्रपर्यन्तमक्त इत्यन्वय ॥ ३५ ॥ उद्धृत्तो दुर्वृत्त ॥ **कुर्वन्त्विति** । आप्ता बान्धवादय । वह्निसात्कात्स्न्र्येन वह्निदेयान् । 'साति कात्स्न्र्ये' इति देयार्थे सातिप्रत्यय । भारान्सघान् । उन्मिश्र युक्तम् । मार्गन्तां प्रार्थयन्ताम् । जना इति शेष' । रणशिरसि गहने व्याप्ते । असौ सूर्यो मम रिपुभि सहास्त गत ।

---

१. 'भ्रमितगुरुगदावज्रसंचूर्णितोरो ' इति पाठ . २ 'तन्मूर्ख भ्रातृचक्रोद्गमन–'. ३. 'आनखाग्रात्'. ४. 'स्त्यानेनार्द्रेण वाक्ष्णो: स्वयमनुभविता भूषण भीमसेन.', 'स्त्यानेनानेन सिक्त स्वयमनुभविता भूषण भीमसेन.' इति पाठौ. ५. 'अय'. ६. 'उद्धृत्तारातिचक्रः'. ७. 'विक्रमाक्रान्त–'. ८. 'प्रतापतापितदिङ्मण्डल: स्थापितस्वजन: श्रीमानजातशत्रु'; 'प्रतापतापितदिङ्मण्डल' श्रीमानजातशत्रुः'. ९. 'कुर्वन्त्वत्राहतानां'. १०. 'नृणां'. ११. 'असैमिश्र'.

मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥ ३६ ॥

**उभौ**—यदाज्ञापयत्यार्यः। (इति निष्क्रान्तौ।)

(नेपथ्ये।)

अरे रे गाण्डीवाकर्षणबाहुशालिन्, अर्जुन, अर्जुन, क्वेदानीं गम्यते।

कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतां शूरशून्ये रणेऽस्मिन्।
स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥ ३७ ॥

**धृतराष्ट्रः**—(आकर्ण्य सहर्षम्।) वत्स दुर्योधन, द्रोणवधपरिभवोद्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्शौर्यमश्वत्थामा प्राप्तः। तत्प्रत्युपगमनेन तावदयं संभाव्यतां वीरः।

**गान्धारी**—जाद, पच्चुग्गच्छ एदं महाभाअम्। (क)

(क) जात, प्रत्युद्गच्छैनं महाभागम्।

यथा शत्रवोऽस्तं गतास्तथा रविरपीति भावः। अत्र यद्यपि शत्रुपक्षेऽस्तगमनं विनाशः, सूर्यपक्षेऽदृश्यत्वं तथापि शब्दसाम्यात्प्रयोगः। यद्वा। उभयत्राप्यस्तगमनमदृश्यत्वमात्रं विवक्षितम्। तच्चैकत्र मरणेनान्यत्रान्यगमनेनेत्यन्यदेतत्। संह्रियन्तामुपसंह्रियन्ताम् ॥ ३६ ॥ संभाव्यतां सहर्षीक्रियताम् ॥ **गान्धारीवाक्ये**। जात, प्रत्युद्गच्छैनं महाभागम् ॥ **कर्णेति**। अहानीत्यत्रात्यन्तसंयोगे द्वितीया। तेनाहानि व्याप्येत्यर्थः। अत्र रणे भवता विक्रान्तं पराक्रमः आसीत्। विक्रान्तमिति भावे क्तः। कीदृशे। वन इव शूरशून्ये। अहमुपेतोऽस्मि। कीदृशः। द्रौणिर्द्रोणस्यापत्यम्। 'अत इञ्' इति इञ् प्रत्ययः। किं कृत्वा। पितुरुत्तमाङ्गे स्पर्शं स्मृत्वा। अहं कीदृशः। अनवजितो न केनापि जितः। हेतिरस्त्रम्। कल्पः प्रलयः। घस्मरो नाशकः ॥ ३७ ॥ इत आगम्यतामिहोपविशतु ॥

१. 'मृग्यन्तां'. २. 'असौ'. ३. 'सज्जयन्तां'. ४. 'आः' ५. 'क्वेदमधुना गम्यते' इति पाठः. ६. 'विजयधनुः'. ७. 'भवतः'; 'भवता'. ८. 'अनवहितन्यस्तहेतेः'; 'अनवहितत्यक्तहेतेः'. ९. 'परिभवोद्दीप्तक्रोधपावकः'. १० 'अमरोपमः' इति क्वचिन्नास्ति. ११. 'अयं महात्माश्वत्थामा प्राप्तः। तत्प्रत्युपगमनेन तावदयं संभाव्यतां महावीरः'; 'अयं महात्मा प्रत्युपगमनेनापि संभाव्यताम्' इति पाठौ.

दुर्योधनः—तात, अम्ब, किमनेनाङ्गराजवधाशंसिना [1]वृथायौवन-शस्त्रबलस्मरण ।

धृतराष्ट्रः—वत्स, न खल्वस्मिन्काले पराक्रमवतामेवंविधानां [2]वाङ्मात्रेणापि [3]विरागमुत्पादयितुमर्हसि ।

(प्रविश्य)

अश्वत्थामा—विजयतां कौरवाधिपतिः ।

दुर्योधनः—(उत्थाय।) गुरुपुत्र, इत [4]आस्यताम् ।(इत्युपवेशयति।)

[5]अश्वत्थामा—राजन्दुर्योधन,

कर्णेन [6]कर्णसुभगं बहु यत्तदुक्त्वा
यत्सङ्गरेषु विहितं विदितं त्वया तत् ।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र-
मेषोऽधुना त्यज नृप [7]प्रतिकारचिन्ताम् ॥ ३८ ॥

दुर्योधनः—([8]साभ्यसूयम्।) आचार्यपुत्र,

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल ।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः ॥ ३९ ॥

[9]अश्वत्थामा—(स्वगतम्।) कथमद्यापि स एव कर्णपक्षपातः । अस्मासु च परिभवः । (प्रकाशम्।) राजन्कौरवेश्वर, एवं भवतु । (इति निष्क्रान्त ।)

---

कर्णेनेति । एष द्रौणिरभ्यमित्रमराति लक्ष्यीकृत्याधुनापतित आगतः । अतो हे नृप, प्रतिकारचिन्तां त्यज । मयैव सर्वत्र प्रतीकार कर्तव्य इति भाव । कीदृशोऽहम् । अधिगता ज्या यत्रेदृश धनुर्यस्य सः । अत्र 'धनुषश्च' इति विकल्पेनानङ् ॥ ३८ ॥ अवसान इति । किल निश्चये । क कर्ण इति । तथा

---

१. 'वृथायौवनबलशस्त्रस्मरेण', 'अस्त्रशिक्षाबललाभभारेण', 'वृथायोधेन समालोकितेन'. २ 'वचनमात्रेणैव', 'वचनमात्रेणैव', 'वचनमात्रेण' ३. 'विरागतामुत्पादयितुमर्हसि', 'विरागयितुमर्हसि'. ४ 'आगम्यताम्'. ५. 'अश्व०—(सास्रम्।) राज-न्कौरवाधिपते' इति पाठ. ६. 'कर्णसुखद बहु यत्तदुक्त'. ७. 'अप्रतिकारदुःखम्', 'प्रतिकारदुःखम्'. ८. '(सास्रम्।)'. ९. अश्व०—कथमद्यापि स एव कर्णपक्षपात. । अस्मासु च परिभव । राजन्कौरवेश्वर, एव भवतु', 'अश्व०—अवितथमद्यापि स एव कर्णपक्षपात. । अस्मासु परिभव । राजन्, इद भवतु' इति पाठौ.

धृतराष्ट्रः—वत्स, क एष ते व्यामोहो यदस्मिन्नपि काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि ।

दुर्योधनः—किमस्याप्रियमनृतं च मयोक्तम् । किं वा नेदं क्रोधस्थानम् । पश्य ।

अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम् ।
परिवदति समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥ ४० ॥

धृतराष्ट्रः—वत्स, तवापि कोऽत्र दोषः । अवसानमिदानीं भरतकुलस्य । संजय, किमिदानीं करोमि मन्दभाग्यः । (विचिन्त्य ।) भवत्वेवं तावत् । संजय, मद्वचनाद्ब्रूहि भारद्वाजमश्वत्थामानम् ।

स्मरति न भवान्पीतं स्तन्यं विभज्य सहामुना
मम च मृदितं क्षौमं बाल्ये त्वदङ्गविवर्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च य-
द्वचनविकृतिष्वस्य क्रोधो मुधा क्रियते त्वया ॥ ४१ ॥

---

च कर्णसुयोधनयोर्न विशेष इति भाव ॥ ३९ ॥ **अकलितेति** । विपन्न विनष्टम् । मम समक्षम् । कर्णम् । अस्मिन्नश्वत्थामन्यर्जुने वा परिभवे सति को विशेषः । अपि तु न कोऽपि । हे तात, त विशेषम् । खलु निश्चयेन । कथय । तयो. कृत्या न भेद इति भाव ॥ ४० ॥ **स्मरतीति** । स्तन्यं स्तनदुग्धम् । अमुना सुयोधनेन । त्वदङ्गविवर्तनैस्त्वच्छरीरपरिवर्तनै । मम क्षौम पट्टवस्त्र यन्मृदित तन्न स्मरतीत्यन्वय । यदस्य सुयोधनस्य कनिष्ठवधदीप्ताच्छोकादति-

---

१. 'धृत०—वत्स, क एष ते व्यामोहः । अस्मिन्काले एवविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि'; 'धृत०—वत्स, क एष ते व्यामोहः । अस्मिन्काले एवविधस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि', 'धृत०—(पुत्र प्रति ।) वत्स, क एष भवतो व्यामोहो यदस्मिन्कालेऽश्वत्थाम्नो विरागमुत्पादयसि' इति नानाविधः पाठः. २. 'अप्रिय मयोक्तम्'; 'अप्रियमनृतं मयोक्तम्'. ३. 'नेदं कोपस्य स्थानम्', 'नाय क्रोधस्थानम्'. ४. 'भाग्यदोषै.'. ५. 'परिभवति'. ६. 'अथवा वत्स'. ७. 'इद'. ८. 'वत्स, सजय'. ९. 'चिराय'. १०. 'मलिनं'. ११. 'जात.' १२. 'यद्विकृतवचने मास्मिन्क्रोधश्चिर क्रियतां त्वया', 'तद्विकृतवचने मास्मिन्क्रोधश्चिरं क्रियता त्वया'; 'यद्वचनविकृतिस्तस्य क्रोधो मुधा क्रियते त्वया'.

**संजयः**—यदाज्ञापयति तातः । (इत्युत्तिष्ठति।)

**धृतराष्ट्रः**—अपि चेदमन्यत्त्वया वक्तव्यम् ।

यन्मोचितस्तव पिता वितथेन शस्त्रं
यत्तादृशः परिभवः स तथाविधो[1]ऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषं च
दुर्योधनोक्तमपहाय[2] विधास्यसीति ॥ ४२ ॥

**संजयः**—यदाज्ञापयति[3] तातः । (इति निष्क्रान्तः।)

**दुर्योधनः**—सूत, साङ्ग्रामिकं मे रथमुपकल्पय ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति निष्क्रान्तः।)

**धृतराष्ट्रः**—गान्धारि, इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छावः । वत्स, त्वमप्येवं कुरु ।

(इति परिक्रम्य निष्क्रान्ताः सर्वे।)

## इति पञ्चमोऽङ्कः ।

---

अश्रयाच्च तद्वचनविकृतिषु सतीषु त्वया विफलः क्रोधः क्रियते । न कर्तुमर्हतीत्यर्थः ॥ ४१ ॥ **यदिति** । तादृशः प्रसिद्धः । तथाविधस्तत्तत्प्रकारकः । एतद्विचिन्त्यात्मनि बलं च सामर्थ्यं पौरुषं विधास्यतीति वक्तव्यमित्यन्वयः । किं कृत्वा । दुर्योधनोक्तं त्यक्त्वा । केचित्तु विधास्यतीत्यत्र प्रतीकारमिति शेषः इत्यूचुः ॥ ४२ ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ प्रयातो ग्रन्थे मनोहारिणि पञ्चमोऽङ्कः ॥

**इति पञ्चमोऽङ्कः ।**

---

१. 'तथाविधे'. २. 'अपनीय'. ३. 'यथाज्ञापयति तातः'.

षष्ठोऽङ्कः ।

(ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च[1] ।)

**युधिष्ठिरः**—(विचिन्त्य निश्वस्य च ।)

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये[3] च याते दिवम् ।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे[4] जये
सर्वे जीवितसंशयं वयममी वाचा[5] समारोपिताः ॥ १ ॥

**द्रौपदी**—(सबाष्पम् ।) महाराअ[6], पञ्चालिए त्ति किं ण भणिदम्[7]। (क)

**युधिष्ठिरः**—कृष्णे, ननु मया । (पुरुषमवलोक्य ।) बुधक,

**पुरुषः**—देव[8], आज्ञापय ।

(क) महाराज, पाञ्चाल्येति किं न भणितम् ।

**तीर्णे इति** । तीर्णेऽतिक्रान्ते । निर्वृत उपशान्ते । आशी सर्पदंष्ट्रा तत्र विषं यस्य तादृशो यो भोगी सर्पस्तस्मिन् । 'आशीराश्यहिदंष्ट्रायाम्' इति शब्दभेद । 'भोग सुखे स्त्र्यादिभृतावहेश्च फणकाययो' इति विश्व (? अमर) । यद्यप्यत्रैकपदेनैवापर गतार्थं तथापि विषोल्बणविषधरज्ञापनार्थं तदुक्तम् । यद्वा । आश्या विषं यत्र भोगे शरीरे सोऽस्यास्तीत्याशीविषभोगी विषधर इति व्युत्पत्ति. । न चात्रापि गतार्थता । विशिष्टनाम्नो विवक्षाया अपर्यनुयोज्यत्वादिति दिक् । दिवं स्वर्गम् । स्वल्पावशेषेऽपि जये सति भीमेनामी सर्वे वयं वाचा प्रतिज्ञारूपया जीवितसंशयं समारोपिता इत्यन्वय ॥ १ ॥ **द्रौपदीवाक्ये** । ण वदामि न पाञ्चाल्या वर्तितव्यम् । मया न वर्तितव्यमिति शेष' ॥ अपर्युषिता

१. केषुचित्पुस्तकेषु पुरुषशब्दस्थाने कञ्चुकिशब्दो वर्तते. २. 'युधिष्ठिरः—(सचिन्तं निश्वस्य ।) कष्टं भोः कष्टम् । तीर्णे भीष्ममहार्णवे', 'युधिष्ठिरः—तीर्णे भीष्ममहोदधौ', 'युधिष्ठिरः—(विचिन्त्य निश्वस्य च ।) तीर्णे भीष्ममहार्णवे' इति पाठान्तराणि. ३. 'शल्येऽपि याते दिवम्' इति दशरूपके पाठः. ४. 'अल्पावशेषे', 'अल्पावशिष्टे'. ५. 'वाचा समारोपिताः' इत्यस्मादनन्तरं केचित् '(पुरुषमवलोक्य ।) भद्र बुधक, उच्यतां सहदेवो यथा' इति पठन्ति. ६. 'महाराअ' इति क्वचिन्नास्ति. ७. 'भणासि'. ८. 'देव' इति क्वचिन्नास्ति.

युधिष्ठिरः—उच्यतां सहदेवः—'क्रुद्धस्य वृकोदरस्य[1]अपर्युषितां प्रतिज्ञामुपलभ्य प्रणष्टस्य मानिनः [2]कौरवराजस्य पदवीम[3]न्वेष्टुमतिनिपुणमतयस्तेषु तेषु [4]स्थानेषु [5]परमार्थाभिज्ञाश्चराः सुसचिवाश्च भक्तिमन्तः [6]पटुपटहरवव्यक्तघोषणाः [7]सुयोधनसंचारवेदिनः प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु [8]समन्तात्समन्तपञ्चकम् । अपि च ।

[9]पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु [10]दाशाः
[11]कक्षेषु क्षुण्णवीरुन्निचयपरिचया बल्लवाः संचरन्तु ।
[12]नागव्याघ्राटवीषु श्वपचपुरविदो ये च रन्ध्रेष्वभिज्ञा
ये[13] सिद्धव्यञ्जना वा प्रतिमुनिनिलयं तेषु चाराश्चरन्तु ॥ २ ॥'

---

नान्यदिनगामिनीम् । प्रणष्टस्य गुप्तस्य । पटुपटहघोषणा निपुणं पटहं वादयन्तः । प्रसिद्धार्थमिदम् । प्रतिश्रुताङ्गीकृता सद्दत्तधनादीनां प्रत्युपक्रिया यैस्ते तथा । समन्तपञ्चकं देशभेदः । **पङ्क इति ।** पङ्के कर्दमे । सैकतं वालुकामयम् । सुनिभृतपदवी गुप्तपद्धतिः । 'कैवर्ते दाशधीवरौ' इत्यमरः । कक्षः कच्छाली । वीरुन्निचयो लतासंघस्तस्य परिचयो ज्ञानं येषां ते । बल्लवा गोपाः । नागव्याघ्रप्रधाना अटव्यो वनानि । तासु श्वपचपुरविदश्चाण्डालपुरवेदिनः संचरन्तु । नागो हस्ती । 'निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः' इत्यमरः । रन्ध्रेषु परच्छिद्रेषु । सिद्धव्यञ्जनाः सिद्धपुरुषचिह्नवन्तः । चरा एव चाराः । प्रज्ञादित्वात्स्वार्थेऽण् । तथा च यत्र ये

---

१. 'दारुणां प्रतिज्ञामुपलभ्य', 'अपर्युषितदारुणां प्रतिज्ञामुपलभ्य', 'अपर्युषितां प्रतिज्ञां दारुणामुपश्रुत्य' इति पाठान्तराणि. २. 'कौरवनाथस्य'. ३. 'ईक्षितुम्'. ४. 'स्थानान्तरेषु'. ५ 'परमार्थाभिज्ञाश्चरा मन्त्रिणश्च', 'यथार्थाभिज्ञाश्चराः सुसचिवाश्च'; 'यथार्थाभिज्ञाश्च सुसचिवाश्च'; 'यथार्थाभिज्ञाः सुसचिवाश्च', 'यथार्थाभिज्ञाश्चाराः संचरन्तु । सुसचिवाश्च' इति पाठान्तराणि ६. 'पटुपटहघोषणा' इति जगद्धरसमादृतः पाठः. ७. 'सुयोधनपदसंचारवेदिनः' इति बहुपुस्तकानां पाठः. ८. 'समन्तात्' इति क्वचिन्नास्ति ९ 'पङ्के वा सैकते वाप्सु च परपदवीवेदिनः' इति क्वचित्पाठः १०. 'दासाः' ११. 'कुञ्जेष्वाक्रान्तवीरुन्निचयपरिचयाः', 'कुञ्जेष्वाक्रान्तवीरुन्निकरपरिचयाः', 'कुञ्जेषु क्षुण्णवीरुन्निचयपरिचयाः'. १२. 'नागव्याघ्राटवीषु स्वपरपदविदो ब्रह्मदेशे च सस्थाः'; 'व्याधा व्याघ्राटवीषु स्वपरपदविदो ये च रन्ध्रेष्वभिज्ञाः' इति पाठौ. १३. 'ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु' इति पाठः.

**पुरुषः**—[1]यथाज्ञापयति देवः ।

**[2]युधिष्ठिरः**—तिष्ठ । एवं च वक्तव्यः सहदेवः ।

ज्ञेया रहः शङ्कितमालपन्तः
सुप्ता [3]रुगार्ता मदिराविधेयाः ।
त्रासो मृगाणां वयसां विरावो
नृपाङ्कपादप्रतिमाश्च [4]यत्र ॥ ३ ॥

**[5]पुरुषः**—यदाज्ञापयति देवः । (इति निष्क्रम्य पुन प्रविश्य सहर्षम् ।) देव, पाञ्चालकः प्राप्तः ।

**युधिष्ठिरः**—त्वरितं प्रवेशय ।

**पुरुषः**—(निष्क्रम्य पाञ्चालकेन सह प्रविश्य ।) एष देवः । उपसर्पतु पाञ्चालकः ।

**पाञ्चालकः**—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।

**युधिष्ठिरः**—[6]पाञ्चालक, [7]कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी ।

---

निपुणास्तत्र ते गच्छन्त्विति भाव ॥ २ ॥ **ज्ञेया इति** । रह एकान्ते । शङ्कित शङ्कास्पदमालपन्तो जना ज्ञेयाः । एवं सुप्तादिष्वपि ज्ञेया इत्यनेनान्वय. । मदिराविधेया मत्ता । नृपाङ्को राजचिह्न मत्स्यादि यत्र पादप्रतिमाया ताश्च यत्र स्थानि ज्ञेयानीत्यन्वय । 'वय पक्षिणि बाल्ये च' इति विश्व । प्रतिमा प्रतिकृति. ॥ ३ ॥

---

१ 'यदाज्ञापयति देव.'. २. 'युधिष्ठिर.—तिष्ठ । इदमपर वक्तव्य. सहदेव ', 'युधिष्ठिरः—एव वक्तव्य सहदेव ' इति पाठौ ३. 'रुगार्ताश्च वने विचेया.' इति बहव ४. 'शत्रो.'. ५. 'कञ्चुकी—यथाज्ञापयति देवः । (इति निष्क्रम्य पुन प्रविश्य सहर्षम् ।) देव, पाञ्चालकः प्राप्त । युधि०—त्वरित प्रवेशय । कञ्चुकी—(निष्क्रम्य पाञ्चालकेन सह प्रविश्य ।) एष देव । उपसर्पतु । पाञ्चा०—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।', 'पुरुष.—यथाज्ञापयसि । (इति निष्क्रान्तः ।) पाञ्चा०—(प्रविश्य ।) प्रियमावेदयामि महाराजाय देव्यै च' इति पाठौ. ६. 'भद्र पाञ्चालक'. ७. 'कच्चिदासादिता तस्य दुरात्मन कौरवापसदस्य पदवी'; 'कच्चिदासादिता तस्य कौरवाधमस्य पदवी', 'कच्चिदासादिता तस्य दुरात्मन. पदवी' इति पाठान्तराणि.

**पाञ्चालकः**—न[1] केवलं पदवी । स एव दुरात्मा [3]देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।

**युधिष्ठिरः**[4]—साधु । भद्र, प्रियमावेदितम् । अथ दर्शनगोचरं गतः ।

**पाञ्चालकः**—देव, समरगोचरं पृच्छ ।

**द्रौपदी**[5]—(सभयम् ।) कहं समरगोअरो वट्टइ मे णाहो । (क)

**युधिष्ठिरः**[6]—(साशङ्कम् ।) सत्यं समरगोचरो मे वत्सः ।

**पाञ्चालकः**—सत्यम् । किमन्यथा वक्ष्यते महाराजाय ।

**युधिष्ठिरः**—

त्रस्तं विनापि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति ।

(क) कथं समरगोचरो वर्तते मे नाथः ।

प्रधानहेतुर्मुख्यनिमित्तम् ॥ अथ प्रश्ने ॥ **द्रौपदीवाक्ये** । कथ समरगोचरो वर्तते मे नाथ ॥ **त्रस्तमिति** । प्रियस्य चेतो विवेकमान्द्यमुपैति । कीदृशम् । विषयात्त्रासहेतोर्विनापि त्रस्तमिति वस्तुस्थितिः । प्रकृते तां योजयति—जानामीति । परिशङ्कित सावधानम् । विषयादिति विनायोगे पञ्चमी । 'भ्रातुर्विनापि विजयादुरुविक्रमस्य' इति पाठे मम चेतो विवेकपरिमन्थरतामुपैत्युरु-

१. 'देव, न केवल पदवी' इति बहव.. २. 'अपि'. ३. 'देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुः'; 'देवीकेशस्पर्शमहापातकप्रधानहेतु.' इति पाठौ. ४. 'युधिष्ठिर —(सहर्षं पाञ्चालक परिष्वज्य ।) साधु भद्र, साधु । भवता प्रियमावेदितम् । अपि दर्शनगोचर गतः', 'युधिष्ठिर.—साधु भद्र, साधु । भवता प्रियमावेदितम् । अपि दर्शनगोचर गत.', 'युधिष्ठिर —(सहर्षं परिष्वज्य पारितोषिक भूषण प्रयच्छति ।) साधु भद्र, साधु । भवता प्रियमावेदितम् । अपि दर्शनगोचर गत'; 'युधिष्ठिरः—(सहर्षं पाञ्चालक परिष्वज्य ।) साधु भद्र, प्रियमावेदितम् । अथ दर्शनगोचरं गत.', 'युधिष्ठिर —साधु भद्र, प्रियमावेदित मे । दर्शनगोचर गतः' इति नानाविधः पाठः. ५. 'द्रौपदी—(साशङ्कम् ।) कह समरगोअरे वट्टइ मे णाहो' इति पाठः. ६ 'युधिष्ठिर.—(साशङ्कम् ।) भ्रातुर्विनापि विजयादुरुविक्रमस्य' इति पाठः.

जानामि चोद्यतगदस्य वृकोदरस्य
सारं रणेषु[2] भुजयोः परिशङ्कितं[3] वा ॥ ४ ॥

(द्रौपदीमवलोक्य[4] ।) अयि सुक्षत्रिये,

गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः
पुराभूदस्माकं नृपसदसि योऽयं परिभवः ।
प्रिये[5] प्रायस्तस्य द्वितयमपि पारं गमयति[6]
क्षयः प्राणानां नः[7] कुरुपतिपशोर्वाथ निधनम्[8] ॥ ५ ॥

अथवा[9] कृतं संदेहेन ।

नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणक्षमः[10] ॥ ६ ॥

पाञ्चालक,[11] कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किं वाधुना प्रवृत्तमिति ।

**द्रौपदी**—भद्द,[12] कहेहि कहेहि । (क)

(क) भद्र, कथय कथय ।

---

विक्रमस्य भ्रातुर्विजयाद्विनापि । शत्रुणा यद्यपि मम भ्राता न जितस्तथापि स्नेहान्मम चित्तमान्द्यमित्यर्थः ॥ ४ ॥ **गुरूणामिति** । हे प्रिये, तस्य परिभवस्य द्वितयमेव कर्म पारं गमयति । अपिरेवार्थे । तदेवाह—क्षय इति । नोऽस्माकं प्राणविनाशः कुरुपतिपशोः प्राणविनाशो वा । तदुभयमित्यर्थः ॥ ५ ॥ **नूनमिति** । बध्यत इति बन्धयितव्यो नाश्यते च । 'बन्ध बन्धने' । 'वध हिंसायाम्' । इत्येतयो रूपम् ॥ ६ ॥ **द्रौपदीवाक्ये** । भद्र, कथय ॥

---

१. 'उद्धतगदस्य'. २. 'विजये'. ३. 'परिशङ्कितश्च'. ४. '(द्रौपदीमवलोक्य मुखादस्या बाष्पमपनयति ।)', '(द्रौपदीमवलोक्य मुखादस्या बाष्पं नयति ।)' इति पाठौ. ५. 'प्रेय'. ६. 'गमयितु', 'गमयतु' ७. 'वा'. ८. 'तस्य निधनम्'; 'वापि समरे'. ९ 'अथवानास्पद एव संदेहः' इति पाठः. १० 'आकर्षणे क्षमः'; 'आकर्षणे प्रभुः'; 'आकर्षणप्रभुः'. ११. 'पाञ्चालक, कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किमधुना प्रवृत्तमिति', 'पाञ्चालक, कथमुपलब्धः कस्मिन्नुद्देशे किमधुना प्रवृत्तं कथय' इति पाठौ. १२. 'भद्द' इति क्वचिन्नास्ति.

**पाञ्चालकः**—शृणोतु देवो देवी च । अस्तीह देवेन हते मद्राधिपतौ शल्ये गान्धारराजकुलशलभे सहदेवशस्त्रानलं प्रविष्टे सेनापतिनिधननिराक्रन्दविरलयोधोज्झितासु समरभूमिषु रिपुबलपराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु प्रनष्टेषु कृपकृतवर्माश्वत्थामसु तथा दारुणामपर्युषितां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः

**युधिष्ठिरः**—ततस्ततः ।

**द्रौपदी**—अयि, परदो कहेहि । (क)

**पाञ्चालकः**—अवधत्तां देवो देवी च । ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च । अनन्तरं दैवमनुशोचति मादृशे भृत्यवर्गे दीर्घमुष्णं च निश्वसति कुमारे बीभत्सौ जलधरसमयनिशासंचारित-

(क) अयि, परतः कथय ।

निराक्रन्दोऽतिरुदन् । वल्गित गतिविशेष । आसादित आक्रान्त । तथा दारुणां प्रतिज्ञापूरणाभावे निजवधरूपाम् ॥ **द्रौपदीवाक्ये** । अयि, इतः परत कथय ॥ पर्यटितुं भ्रमितुम् । 'खद्योतो ज्योतिरिङ्गण' इत्यमर ।

१. 'मद्राधिपे'; 'मद्रपतौ' २. 'गान्धारराजशलभकुले सहदेवानल प्रविष्टे', 'सहदेवशस्त्रानलमनुप्रविष्टे गान्धारराजशलभे', 'गान्धारराजकुलशलभे सहदेवानल प्रविष्टे' इति पाठान्तराणि. ३. 'निरानन्द–', 'नराक्रन्द–'. ४. 'रिपुपराजयोद्धतवेल्लितविचित्र–', 'रिपुपराजयोद्धतचलितविचित्र–'. ५. 'दारुणा प्रतिज्ञामुपलभ्य', 'दारुणामपर्युषिता च प्रतिज्ञामुपलभ्य' इति पाठौ. ६. 'वृकोदरस्य'. ७. 'द्रौपदी—अग्गदो कहेहि' इति बहुपुस्तकाना पाठः. ८. 'वासुदेवेनाधिष्ठितावेकरथारूढौ कुमारभीमार्जुनौसमन्तात्समन्तपञ्चक पर्यटितुमारब्धौ न चासादितवन्तौ तम्', 'वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ वय च समन्तात्समन्तपञ्चक पर्यटितुमारब्धास्तमनार्यमनासादितवन्तश्च' इति पाठौ ९. 'अनन्तरं च'. १०. 'निश्वसति कुमारबीभत्सौ', 'निश्वसति बन्धुवर्गे'.

खद्योतप्रकरपिङ्गलैः कटाक्षैरादीपयति गदां[1] वृकोदरे[2] यत्किंचनकारितामधिक्षिपति विधेर्भगवति नारायणे कश्चित्संविदितः कुमारस्य मारुतेरुज्झितमासभारः प्रत्यग्रविशसितमृ[3]गलोहितचरणनिवसनस्त्वरमाणो[4]ऽन्तिकमुपेत्य पुरुषः[5] श्वासग्रस्तार्धश्रुतवर्णानुमेयपदया वाचा कथितवान्—'[6]अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती समवतीर्णप्रतिबिम्बे। तयोरेका स्थलमुत्तीर्णा न द्वितीया। परत्र कुमारः प्रमाणम्' इति। ततः ससंभ्रमं प्रस्थिताः सर्वे वयं त[7]मेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञायमानसुयोधनपदलाञ्छनां पदवीमासाद्य भगवता वासुदेवेनोक्तम्—'भो वीर वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम्। तन्नूनं तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम्।' एतच्च वचन-

---

पिङ्गला कपिशा। आदीपयत्युद्योतयति सति। यत्किंचित्कारितां यत्र तत्रानुसधानादिकं प्रतिषेधयति। संविदित ख्यात पुरुष। कुमारमारुतेरन्तिकमुपेत्य वाचा कथितवानित्यन्वयः। लोहित रक्तम्। श्वासग्रस्तोऽर्धश्रुतो यो वर्णोऽक्षर तेनानुमेय पदं यस्यास्तया। समवतीर्णे उद्दिष्ट' प्रतिबिम्बोऽनुकृतिर्ययोस्ते तथा। प्रमाणमभिमतर्के कुमार एव कर्तेत्यर्थ। सरसीमिति 'अधिशीङ्स्थासां कर्म' इत्याधारे कर्म।

---

१. 'तडित्प्रकरपिङ्गलै.'. २. 'नाथे वृकोदरे यत्किंचनकारिता च विक्षिपति भगवति नारायणे' इति पाठ॰. ३. 'मृगालोहितचरणनिवसनः', 'मृगलोहितलोहितचरणनिवसन.' ४. 'असमदन्तिक' ५. 'परुषश्वासग्रस्तार्धश्रुतवर्णानुमेयपदया वाचा कथितवान्', 'श्वासग्रस्तार्धश्रुतवर्णानुमेयसमुदाचार. कथितवान्' इति पाठौ. ६. 'देव कुमार, अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती जलमवतीर्णे। तयोरेका स्थलमुत्तीर्णा न द्वितीया लक्षिता', 'देव कुमार, अस्मिन्महतोऽस्य सरस्तीरे द्वे पद्धती समवतीर्णपदप्रतिबिम्बे। तयोरेका जलोत्तीर्णा न द्वितीया', 'तिष्ठतो महतोऽस्य सरसस्तीरे द्वे पद्धती समवतीर्णप्रतिबिम्बे तयोरेका जलोत्तीर्णा न द्वितीया' इति पाठान्तराणि. ७. 'तमेव पुरुष पुरस्कृत्य सरसस्तीरम्। परिज्ञाय सुयोधनपदलाञ्छिता पदवी कथित भगवता वासुदेवेन। वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भनी विद्याम्। नून तेन त्वद्भयात्'; 'तमेव पुरस्कृत्य गत्वा च सरस्तीर परिज्ञाय सुयोधनपदलाञ्छितां पदवीमासाद्य भगवता वासुदेवेनोक्तम्। भो वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भिनी विद्याम्। नून तेन त्वद्भयात्' इति पाठौ.

मुपश्रुत्य [1]रामानुजस्य सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसलिलचरशकुन्तकुलं त्रासोद्धतनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्—[2]'अरे रे वृथाप्रख्यापितालीकपौरुषाभिमानिन्, [3]पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्,

जन्मेन्दोर[4]मले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणित[5]सुराक्षीब रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
[6]त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ ७ ॥

अपि च । भो [7]मानान्ध,

पाञ्चाल्या [8]मन्युवह्निः स्फुटमुपशमितप्राय [9]एव प्रसह्य
[10]व्यासक्तैः केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु ।

---

रामानुज कृष्णः। शकुन्तः पक्षी। नक्रो जलजन्तुभेदः। ग्राहो 'गोह' इति प्रसिद्धः। **जन्मेति**। क्षीब मत्तम्। नृपशो जनाधम। इह क्षतिनामावमर्शसधिः। यदाह—'अधिक्षेपोक्तिः क्षतिर्मता' इति ॥ ७ ॥ **पाञ्चाल्या इति**। कौरवान्तःपुरेषु मया हतपतिषु सत्सु तदीयकेशपाशैर्व्यासक्तैः सवद्भिर्द्रौपद्या मन्युवह्निरुपशमित-

---

१. 'रामानुजस्य सकलनिकुञ्जपूरिताशातिरिक्तमुद्भ्रान्तसलिलचरशतसकुलं त्रासोद्धृतनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा'; 'बलानुजस्य सकलदिक्प्रपूरितातिरिक्तमुद्भ्रान्तसकलसलिलचारिचक्रं त्रासोद्धतनक्रमालोडितसरःसलिलं भैरवं च गर्जित्वा', 'बलानुजस्य सकलदिक्प्रपूरितातिरिक्तमुद्भ्रान्तसकलसलिलचारिचक्रं त्रासोद्धतनक्रमालोडितं सरःसलिलं भैरवं च गर्जित्वा', 'बलानुजस्य सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसकलसलिलचरशकुन्तकुलं त्रासोद्भ्रान्तमत्स्यग्राहमालोडितं सरःसलिलमतिभैरवं गर्जित्वा' इति पाठान्तराणि. २. 'अरे रे' इत्यस्मादारभ्य 'महापातकिन्' इत्यन्तं क्वचिन्नास्ति. ३. 'पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद', 'पाञ्चालराजतनयाकेशाम्बराकर्षण, महापातकिन्, धार्तराष्ट्रापसद'; 'द्रुपदसुताकेशाम्बराकर्षणमहापातकिन्' इति पाठान्तराणि. ४. 'विमले' इति बहवः. ५. 'मधुक्षीब रिपुं मन्यसे' इति पाठः. ६. 'त्रासान्मे' इति दर्पणकृत. पाठः. ७. 'मानान्ध, कौरवाधम' इति बहुपुस्तकानां पाठः. ८. 'क्रोधवह्निः' ९. 'एष प्रसह्य'. १०. 'व्यामुक्तैः'; 'प्रोन्मुक्तैः'.

भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये यत्त्वयास्तोऽभिमानः ॥ ८॥

द्रौपदी—णाह, अवणीदो मे मण्णु जइ पुणो वि सुलहं दंसणं भविस्सदि । (क)

युधिष्ठिरः—कृष्णे, नामङ्गलानि व्याहर्तुमर्हस्यस्मिन्काले[1] । भद्र, ततस्ततः ।

पाञ्चालकः—ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं गदापरिघपाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनीवनमपविद्धमूर्च्छितग्राहसुभ्रान्तमत्स्यशकुन्तमतिभैरवारवभ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् ।[2]

युधिष्ठिरः—भद्र, तथापि किं नोत्थितः ।[3]

पाञ्चालकः—देव[4],

(क) नाथ, अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति ।

भ्राय एवेत्यन्वयः । दुःशासनवक्षसः स्रवद्रक्तं मया पीयमानमालोक्य त्वया मयि भीमसेने किं विहितं यदकाल एव मानोऽस्तस्त्वया । इदानीं स कर्तुमर्हतीति भावः ॥ ८ ॥ **द्रौपदीवाक्ये** । अपनीतो नाथेन मम मन्युर्यदि पुनरपि सुलभदर्शनं स भविष्यति ॥ परिघोऽस्त्रभेदः । 'परिघः परिघातनः' इत्यमरः । वृकोदरेण सरः आलोडितमित्यन्वयः । उल्लङ्घितमतिक्रान्तम् । अपविद्धः परित्यक्तः । आयतं दीर्घम् ॥

१. 'अस्मिन्काले' इति क्वचिन्नास्ति २. 'देव, ततश्चैव भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं भ्रमितभीषणगदापरिघव्यक्तपाणिना सहसैवोल्लङ्घिततीरमुत्सन्नफुल्लनलिनीवनमाविद्धमूर्च्छितग्राहसुभ्रान्तमत्स्यशकुन्तमतिभैरवारववेगभ्रमितवारिसचयमायतमपि तत्सरः समन्तादालोडितम् ।'; 'देव, ततश्चैव भाषमाणेन वृकोदरेण वीर्यक्रोधोद्धतभ्रमितभीषणगदापाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनमाविद्धमूर्च्छितग्राहसुभ्रान्तसमस्तशकुन्तमतिभैरव वेगभ्रमितवारिसचयमायतमपि सरः समन्तादवलोडितम् ।', 'ततश्चैव भाषमाणेन वृकोदरेण वीर्यक्रोधोद्धतभीमगदापाणिना सहसोल्लासिततीरमुत्सन्ननालिनमाविद्धमूर्च्छितग्राहसुभ्रान्तसमस्तशकुन्तमतिभैरव वेगभ्रमितवारिसचयमायतमपि सरः समन्तादवलोडितम् ।' इति पाठान्तराणि ३. 'युधि०—भद्र, तथापि नोत्थितः', 'युधि०—तथापि नोत्थितः.' इति पाठौ. ४. 'देव, कथं नोत्थितः.' इति बहवः.

त्यक्त्वोत्थितः सरभसं सलिलं[1] सलील-
मुद्भूतकोपदहनोग्रविषस्फुलिङ्गः ।
आयस्त[2]भीमभुजमन्दरवेल्लनाभिः
क्षीरोदधेः[3] सुमथनादिव कालकूटः ॥ ९ ॥

**युधिष्ठिरः**—साधु सुक्षत्रिय[4], साधु ।

**द्रौपदी**—पडिवण्णो समरो[5] ण वा । (क)

**पाञ्चालकः**—उत्थाय च तस्मात्[6]सलिलाशयात्करयुगलोत्तम्भित-तोरणीकृतभीमगदः[7] कथयति स—'अरे रे मारुते[8], किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् । मूढ, अनिहतपाण्डुपुत्रः[9] प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम्[10] ।' एवं चोक्ते[11] वासुदेवकिरीटिभ्यां द्वावप्यन्तःसलिलं निषिद्धसमरारम्भौ[12] स्थलमुत्तारितौ । आसीनश्च

(क) प्रतिपन्नः समरो न वा ।

**त्यक्त्वेति** । सलील सहेलम् । कालकूटो विषम् । दुर्योधनकालकूटयोः साम्यमाह—उद्भूतेति । उद्भूतो य कोपाग्निः स एवोग्रविषस्य स्फुलिङ्गो यत्र स तथा । आयस्त क्षिप्त । वेल्लना चालनम् ॥ ९ ॥
**द्रौपदीवाक्ये** । प्रतिपन्न समरो न वा । अत्र प्रतिपन्नो लग्न ॥ उत्तम्भितोत्तोलितात एव तोरणसदृशी कृता गदा येन स तथा ।

१ 'सलिलं सलीलमुद्भ्रान्तकोपदहनोग्रविषस्फुलिङ्ग.'; 'सरस. स मूलमुद्भूत-कोपदहनो विपविस्फुलिङ्ग', 'सरस स मूलमुद्भ्रान्तकोपदहनोग्रविपस्फुलिङ्ग.' २. 'आयत्त–'. ३. 'क्षीराम्बुधेः सुमथितादिव', 'क्षीरोदविप्रमथनादिव'. ४. 'महाक्षत्रिय'. ५. 'समरे', 'स समरो' ६. 'अस्मात्' ७. 'घोरगद.'. ८. 'मारुते, किं भवतो भयेन प्रलीन दुर्योधन समर्थयसे', 'मारुते, किं भवतो भयेन प्रलीन दुर्योधन कथयसि' इति पाठौ. ९. 'अनभिहतपाण्डुपुत्र.'. १०. 'विश्रामार्थमध्यवसितवानस्मि पातालम् ।'; 'विश्रान्तिमध्यवसितवानहमस्मि । अतोऽलमलम् ।' इति पाठौ. ११. 'एव चोक्तवति', 'एव चोक्त'. १२. 'निषिद्धसमरसमारम्भौ स्थलमुत्तारितौ भीमसुयोधनौ', 'निषिद्धसमरसमारम्भौ तीरमुत्तारितौ भीमसुयोधनौ', 'निषिद्धसमरसमारम्भौ भीमसुयोधनौ' इति पाठान्तराणि.

कौरवराजः क्षितितले गदां निक्षिप्य विशीर्णरथसहस्रं निहतकुरुसहस्रगजवाजिनरसहस्रकलेवरसंमर्दसंपतद्गृध्रकङ्कजम्बुकमसमद्वीरमुक्तसिंहनादमपमित्रबान्धवमकौरवं रणस्थानमवलोक्यायतमुष्णं च निश्वसितवान्। ततश्च वृकोदरेणाभिहितम्—'अयि भोः कौरवराज, कृतं बन्धुनाशदर्शनमन्युना। मैवं विषादं कृथाः पर्याप्ताः पाण्डवाः समरायाहमसहाय इति।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन।
दंर्शितस्यात्तशस्त्रस्य तेनं तेऽस्तु रणोत्सवः॥ १०॥

इत्थं श्रुत्वाऽसूयान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्धार्तराष्ट्रः।

कर्णदुःशासनवधात्तुल्यावेव युवां मम।
अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः॥ ११॥

---

कलेवर शरीरम्। जम्बूक शृगालः। पर्याप्ता आगता। **पञ्चानामिति**। अस्माक मध्ये। दर्शितस्य कृतसन्नाहस्य। तेन सह तव रणोत्सवोऽस्त्विति सबन्ध। तेनेति सहार्थे तृतीया॥ १०॥ कुमारयोर्भीमार्जुनयो। **कर्णेति**। हे भीम, त्वमेव योद्धु प्रियः। कीदृश। अमित्र. साहसी च॥ ११॥

---

१. 'विशीर्णरथसहस्र' इति क्वचिन्नास्ति २. 'निहतकुरुशतगजवाजिनरशतकलेवरसमर्दसपतितगृध्रकङ्कजम्बुकमुत्सन्नसुयोधनबलमस्मद्वीरमुक्तसिंहनादसवलितसमरतूर्यमबान्धवममित्रबान्धव कौरवसङ्ग्रामस्थानमवलोक्यायतमुष्ण च निश्वसितवान्'; 'निहतकुरुशतगजवाजिनरकलेवरसपतद्गृध्रकङ्कजम्बुकमुत्सन्नयोधमस्मद्वीरविमुक्तसिंहनादसवलितसमरतूर्यमबान्धवममित्रमकौरव रणस्थानमालोक्य दीर्घमुष्ण च निश्वसितवान्' इति पाठौ ३ 'वृकोदरेणोपगम्याभिहितम्'. ४. 'भो भोः कौरवराज', 'भो. कौरवराज'. ५. 'कृतं बन्धुजननाशजेन मन्युना', 'कृतं बन्धुजनमन्युना', 'अल बन्धुजनमन्युना'; 'कृत बन्धुजननाशमन्युना', 'कृत बन्धुनाशदर्शनजातमन्युना'. ६. 'विषाद मा कृथा.'. ७. 'पाण्डवा' सोऽहमसहाय इति। कि च' इति बहुपुस्तकाना पाठः. ८. 'वर्मितस्य'. ९. 'ते मते'. १०. 'इत्थ च श्रुत्वा किंचिदश्रुपातान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्।' इति बहुपुस्तकाना पाठ., 'इत्थ श्रुत्वासूयात्मिकां निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्तराष्ट्र.।' इति दशरूपके पाठ.. ११. 'त्वमेकः'.

इत्युत्थाय च[1] परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ[2] विचित्रविभ्रमभ्रमितगदापरिभासुरभुजदण्डौ[3] मण्डलैर्विचरितुमारब्धौ भीमदुर्योधनौ। अहं च देवेन चक्रपाणिना[4] देवसकाशमनुप्रेषितः। आह च देवो देवकीनन्दनः। अपर्युषितप्रतिज्ञे च मारुतौ प्रणष्टे कौरवराजे महानासीन्नो विषादः। सम्प्रति पुनर्भीमसेनेनासादिते[5] सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्। अभ्युदयोचिताश्चानवरतं प्रवर्त्यन्ता[6] समारम्भा। कृतं संदेहेन।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय[7] ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम्।
रामे शातकुठारभासुरकरे[8] क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः॥ १२॥

**द्रौपदी**—(सबाष्पम्।) जं देवो त्तिहुअणणाहो भणादि[9] तं कहं अण्णहा भविस्सदि। (क)

(क) यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति।

विभ्रमो विलास। मण्डल करणविशेष। प्रणष्टेऽदृष्टे। समारम्भा मङ्गलादिक्रिया। **पूर्यन्तामिति**। कबरी केशवेश। 'क्षणो मुहूर्तोत्सवयो' इति शाश्वत। कबरीबन्ध इति निमित्तसप्तमी। रामे परशुरामे। शात निश्चितम्। परिपतति गच्छति सति॥ १२॥ **द्रौपदीवाक्ये**। यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति॥ 'आज्ञा निदेश आदेश' इत्य-

१. 'च' इति क्वचिन्नास्ति. २ 'परस्परक्रोधाक्षेपपरुषवाक्कलहप्रसारितघोरसङ्ग्रामौ', 'परस्पराक्षेपप्रवर्तितघोरसङ्ग्रामौ' ३ 'चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विहर्तुमारब्धौ भीमदुर्योधनौ'; 'चिरभ्रमितगदापरिघभासुरभुजपञ्जरौ मण्डलैश्चरितुमारब्धौ भीमदुर्योधनौ' इति पाठौ ४. 'अहं च चक्रपाणिना', 'अत्रान्तरेऽहं च देवेन चक्रपाणिना'. ५ 'पुनर्भीमसेनेन समासादिते सुयोधने निष्कण्टकीकृत भुवनतल परिकलयतु भवान्', 'पुनरस्मिन्दुरात्मनि सुयोधने भीमसेनेनासादिते निष्कण्टकीभूत भुवनतल परिकलयतु भवान्' इति पाठौ. ६. 'च प्रवर्त्यन्तामनवरतमङ्गलसमारम्भाः'; 'चानवरत प्रवर्त्यन्ता मङ्गलसमारम्भा.' इति पाठौ. ७. 'राज्येऽभिषेकाय'. ८. 'घोरकुठारभासुरकरे क्षत्रद्रुमच्छेदिनि' इति बहवः पठन्ति. ९. 'आणवेदि'.

पाञ्चालकः—न केवलमियमाशीः। असुरनिषूदनस्यादेशोऽपि।

युधिष्ठिरः—को हि नाम भगवता संदिष्टं विकल्पयति। कः कोऽत्र भोः।

(प्रविश्य)

कञ्चुकी—आज्ञापयतु देव.।

युधिष्ठिरः—देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजय-मङ्गलाय प्रवर्त्यन्तां तदुचिताः समारम्भाः।

कञ्चुकी—यथाज्ञापयति देव.। (सोत्साहं परिक्रम्य।) भो भोः संविधातॄणां पुरःसराः, यथाप्रधानमन्तर्वेश्मिका दौवारिकाश्च, एष खलु भुजबलपरिक्षेपोत्तीर्णकौरवपरिभवसागरस्य निर्व्यूढदुर्वहप्रतिज्ञा-भारस्य सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य दुःशासनोरःस्थलविदलन-नरसिंहस्य दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जने-र्वृकोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो

मर ॥ संविधातारः पुरोहितादि । यथाप्रधानं प्रधानपुरुषानुक्रमेण । अन्तर्वेश्मिका अन्तःपुरचारिणः । दौवारिका द्वारनियुक्ता । निर्व्यूढं कृतं । प्रभञ्जनो वायुः । प्रभञ्जकस्य भञ्जयितुः । प्राभञ्जनेर्वायुपुत्रस्य भीमस्य । अविक्रम् । मङ्गलकर्मेति

१ 'किमन्यथा संभावितेन। मधुसूदनस्यादेश एवायम्' इति क्वचित्पाठः. २ 'भगवता' ३ 'देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य विजयमङ्गलाशंसया प्रवर्त्यन्तां तदुचिताः समारम्भाः', 'देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजयमङ्गल-शंसया प्रवर्त्यन्तां तदुचिताः समारम्भाः', 'देवस्य देवकीनन्दनस्यादेशाद्वत्सस्य मे मङ्गलविजयाय प्रवर्त्यन्तामनवरतं तदुचिताः समारम्भाः', 'कञ्चुकिन्, देवस्य देवकी-नन्दनस्य बहुमानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्तन्तां तत्रोपचिताः समार-म्भाः.' इति पाठान्तराणि ४ 'यथाज्ञापयति देव.' इति क्वचिन्नास्ति. ५. 'अन्तर्वासिकाः'; 'अन्तर्वेश्मनि'. ६. 'एव खलु' ७. 'कौरवार्णवस्य' ८. 'दुर्धर–'. ९ 'सुयोधनानुज-शतोद्धूननप्रभञ्जनस्य'. १०. 'कुमारदुःशासनोरःस्थलनरसिंहस्य'; 'बलिनः प्राभञ्जने-र्दुःशासनोरःस्थलविदलननरसिंहस्य' इति पाठौ. ११. 'दुर्योधनोरुस्तम्भभङ्गविनि-श्चितविजयस्य' इति पाठः क्वचिन्नास्ति; क्वचित् 'दुर्योधनोरुस्तम्भभञ्जनाय कृतनिश्चित-विजयस्य सहोदरपक्षपातिना चेतसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः.' इति पाठः. १२. 'वृकोदरस्य' इति क्वचिन्नास्ति.

युधिष्ठिरः । (आकाशे ।) किं ब्रूथ—'सर्वतोऽधिकतरमपि प्रवृत्तं किं नालोकयसि' इति । साधु पुत्रकाः, साधु । अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् ।

युधिष्ठिरः—आर्य जयधर ।

कञ्चुकी—आज्ञापयतु देव ।

युधिष्ठिरः—गच्छ प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय ।

कञ्चुकी—यदाज्ञापयति देव । (इति पाञ्चालकेन सह निष्क्रान्तः ।)

द्रौपदी—महाराअ, किणिमित्तं उण णाहभीमसेणेण सो दुराआरो भणिदो—'पञ्चाणं वि अम्हाणं मज्झे जेण दे रोअदि तेण सह दे संगामो होदु' त्ति । जइ मद्दीसुदाणं एक्कदरेण सह संगामो तेण पत्थिदो भवे तदो अच्चाहिदं भवे । (क)

(क) महाराज, किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः—'पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्ग्रामो भवतु' इति । यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहितं भवेत् ।

शेष ॥ पारितोषिकेण परितोषहेतुना धनेन ॥ द्रौपदीवाक्ये । महाराज, अथ किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचार एव भणितः—'पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्गरो भवतु' इति । यदि पुनर्माद्रीसुतयोर्मध्य एकतरेण सह सङ्गरस्तेन प्रार्थितो भवेत्तदात्याहितं भवेत् । अत्र माद्रीसुतौ नकुलसहदेवौ ॥

१ 'सर्वमधिकमपि प्रवृत्तमालोकयतु ।' इति क्वचित्पाठः. २ 'किं वा'. ३. 'अनुकूलहितकारिता प्रकाशयति मनोगतां स्वामिभक्तिम्' इति वा पाठः ४. 'स्वामिभक्तिम्' इत्यस्मादनन्तरं क्वचित् '(राजानमुपगम्य ।) देव, प्रथमत एव सर्वमनुष्ठितम् ।' इत्यधिकः पाठो दृश्यते ५ 'युधि०—आर्य जयधर । कञ्चुकी—आज्ञापयतु देव ।' इति क्वचिन्नास्ति ६ 'युधि०—प्रियख्यापकं पाञ्चालकं पाञ्चाल्या मम च पारितोषिकेण प्राच्छादय' इति पाठः. ७. 'यदाज्ञापयसि । (इति निष्क्रान्तः ।)' इति पाठः. ८. 'द्रौपदी—किं उण णाहेण' इति पाठः ९ 'एव्व भणिदो' इति जगद्धरसमतः पाठः. १० 'मज्झे' इति क्वचिन्नास्ति ११ 'तेण सह सगामो होदु त्ति', 'तेण सह समरं होदु त्ति' १२ 'जइ एदाणं मद्दीसुदाणं एक्कदरेणावि सह संगामो तेण पत्थिदो भवे', 'जइ उण मद्दीसुदाणं मज्झे एक्कदरेण सह संगामो तेण पत्थिदो भवे', 'कहं णाम एदाणं मद्दीसुदाणं एक्कदरेण पत्थिदो तेण संगामो भवे' इति पाठान्तराणि

**युधिष्ठिरः**—कृष्णे, एवं[1] मन्यते जरासंधघाती । हतसकल[2]सुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः परित्यजेदायुध[3] तपोवनं वा व्रजेत्सान्धिं वा पितृमुखेन याचेत । एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति । समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः । शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन । अयि[4] सुक्षत्रिये, पश्य ।

क्रोधोद्धूर्णगदस्य[5] नास्ति सदृशः सत्यं रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे[6] यथा सीरिणि ।
स्वस्त्यस्तूद्धत[7]धार्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम् ॥ १३ ॥

(नेपथ्ये ।)

तृषितोऽस्मि[8] भोस्तृषितोऽस्मि । संभावयतु कश्चित्सलिलच्छायासंप्रदानेन माम् ।

**युधिष्ठिरः**—(आकर्ण्य ।) क. कोऽत्र भोः ।

(प्रविश्य[9])

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—ज्ञायतां किमेतत् ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य पुन' प्रविश्य ।) देव, क्षुन्मा[10]नातिथिरुपस्थितः ।

---

**क्रोधेति** । उद्धूर्ण उद्यमित । 'उद्धूर्णोद्यते' इत्यमर । कृतहस्तताऽस्त्राभ्यासः । 'कृतहस्त' सुप्रयोगविशिख कृतपुङ्खवत्' इत्यमर । सीरिणि बलभद्रे । तस्य

---

१ 'एव मन्ये तस्य जरासधघातिनोऽभिप्राय ' इति पाठ . २. 'हतसकलबन्धुवीरानुजराजन्यासु'. ३ 'परित्यज्य'. ४. 'अयि' इति क्वचिन्नास्ति ५ 'क्रोधाद्धूर्णगदस्य', 'क्रोधोद्धूर्णगदस्य' ६ 'देवस्य या सीरिण.' इति पाठः. ७. 'उद्धृत–' ८. 'भोस्तृषितोऽस्मि, भोस्तृषितोऽस्मि ।'; 'भोस्तृषितोऽस्मि ।' इति पाठौ. ९ 'प्रविश्य सत्वर'. १० 'क्षुधा म्लानोऽतिथिरुपस्थित ' इति पाठ.

**युधिष्ठिरः**—शीघ्रं प्रवेशय ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

(ततः प्रविशति [1]मुनिवेषधारी चार्वाको नाम राक्षसः ।)

**राक्षसः**—([2]आत्मगतम् ।) [3]एषोऽस्मि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि । (प्रकाशम् ।) [4]तृषितोऽस्मि । संभावयतु मां कश्चिज्जलच्छायाप्रदानेन । ([5]इति राज्ञः समीपमुपसर्पति ।)

(सर्व उत्तिष्ठन्ति ।)

**युधिष्ठिरः**—मुने, अभिवादये ।

**राक्षसः**—अकालोऽयं समुदाचारस्य । जलप्रदानेन संभावयतु [6]माम् ।

**[7]युधिष्ठिरः**—मुने, इदमासनम् । उपविश्यताम् ।

**राक्षसः**—([8]उपविश्य ।) ननु भवतापि क्रियता[9]मासनपरिग्रहः ।

**[10]युधिष्ठिरः**—(उपविश्य ।) कः कोऽत्र भोः, सलिलमुपनय ।

(प्रविश्य गृहीतभृङ्गारः)

**[11]कञ्चुकी**—(उपसृत्य ।) महाराज, शिशिरसुरभिसलिलसंपूर्णोऽयं भृङ्गारः पानभाजनं चेदम् ।

---

भीमस्य ॥ १३ ॥ 'भृङ्गारः कनकालुका' इत्यमरः ॥ 'उदन्या तु पिपासा तृट्'

---

१ 'मुनिवेषः'. २ '(आत्मगतम् ।)' इत्यस्मादारभ्य '(प्रकाशम् ।)' इत्यन्तं क्वचिन्नास्ति ३. 'एषोऽस्मि सुयोधनस्य मित्रं', 'एषोऽस्मि सुयोधनस्य परं मित्रं'; 'एषोऽस्मि भोः, सुयोधनस्य मित्रं' इति पाठान्तराणि. ४ 'तृषितोऽस्मि तृषितोऽस्मि' इति क्वचित्पाठः. ५ '(इति राज्ञः समीपमुपगच्छति ।) युधि०—(सहसोत्थाय ।) मुने, अभिवादये' इति क्वचित्पाठः ६. 'मां भवान्'. ७ 'युधि०—मुने, उपविश्यतामासने'; 'युधि०—जयधर जयधर, सलिलं सलिलमुपनय । इदमासनम् । मुने, उपविश्यताम्' इतिपाठौ ८. '(उपविश्य ।)' इत्यत्र '(तथा कृत्वा ।)' इति क्वचित्पाठः. ९. 'आसनपरिग्रहः.' इत्यस्मादनन्तरं '(सर्वे उपविशन्ति ।)' इति केचित्पठन्ति. १०. 'युधि०—कः कोऽत्र भोः ।' इति पाठः. ११. 'कञ्चुकी—(निष्क्रम्य पुनः प्रविश्य ।) शिशिरजलसंपूर्णोऽयं भृङ्गारो भाजनं चेदम् ।' इति क्वचित्पाठः.

**युधिष्ठिरः**—मुने, निर्वर्त्यतामुदन्याप्रतीकारः ।

**राक्षसः**—(पादौ प्रक्षाल्योपस्पृशन्[1]विचिन्त्य ।) [2]भोः, क्षत्रियस्त्वमिति मन्ये ।

**युधिष्ठिरः**—[3]सम्यग्वेदी भवान् ।

**राक्षसः**—[4]सुलभश्च स्वजनविनाशः सङ्ग्रामेषु प्रतिदिनमतो नादेयं भवद्भ्यो जलादिकम् । भवतु । [5]छाययैवानया सरस्वतीशिशिरतरङ्गस्पृशा [6]मरुता चानेन विगतक्लमो भविष्यामि ।

**द्रौपदी**—बुद्धिमदिए, वीएहि महेसिं [7]इमिणा तालविन्तेण । (क)

(चेटी तथा करोति ।)

**राक्षसः**—[8]भवति, अनुचितोऽयमस्मासु समुदाचारः ।

**युधिष्ठिरः**—[9]मुने, कथय कथमेवं भवान्परिश्रान्तः ।

**राक्षसः**—[10]मुनिजनसुलभेन कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं [11]पर्यटामि समन्तपञ्चकम् । अद्य तु [12]बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि ।

---

(क) बुद्धिमतिके, वीजय महर्षिमनेन तालवृन्तेन ।

---

इत्यमर ॥ सरस्वती नदीभेद ॥ **द्रौपदीवाक्ये** । हञ्जे बुद्धिमतिके, वीजयेन महर्षिमेतेन तालवृन्तकेन । 'व्यजन तालवृन्तकम्' इत्यमर ॥ **चेटीवाक्ये** ।

---

१. 'विचिन्त्य' इति क्वचिन्नास्ति. २ 'भो भो.' इति पाठ. ३. 'सम्यग्वेत्ति भवान् । क्षत्रिय एवास्मि ।' इति बहव.. ४. 'प्रतिदिनसुलभस्वजनविनाशेपु सङ्ग्रामेषु युष्मत्तो नादेय सलिलादिकम्', 'यद्येव प्रतिदिनसुलभस्वजनविनाशनेपु सङ्ग्रामेपु युष्मत्तो नादेय सलिलादिकम्', 'सुलभस्वजनविनाशेभ्य प्रतिदिनमनादेय भवद्भ्य. सलिलम्' इति पाठान्तराणि ५. 'छाययैवानयाह सरस्वतीभूमिभागस्पृशा' इति पाठः ६ 'मरुतानेन' ७ 'इमिणा' इति क्वचिन्नास्ति ८. 'अहह, भवति, अनुचितोऽयमस्मासु समुदाचार.'; 'भवतु । अनुचितोऽस्मासु समुदाचारोऽयम्' इति पाठौ ९ 'मुने, कथय कथ पुनरेव', 'मुने, कथ पुनरेवं'; 'मुने सर्वं तावत्तिष्ठतु । कथ पुनरेव' इति पाठान्तराणि १० 'भो बहुजनसुलभेन कौतूहलेन' इति पाठः. ११. 'सदा पर्यटामि' इति पाठ . १२. 'अत्यन्तबलवत्तया शरदातपस्यापर्याप्तमेवालोक्य' इति केचित्.

(सर्वे विषाद नाटयन्ति ।)

**कञ्चुकी**—मुने, न खल्वेवम् । भीमसुयोधनयोरिति कथय ।

**राक्षसः**—आः, अविदितवृत्तान्त एव कथं मामाक्षिपसि ।

**युधिष्ठिरः**—महर्षे, कथय कथय ।

**राक्षसः**—क्षणमात्रं विश्रम्य सर्वं कथयामि भवतो न पुनरस्य वृद्धस्य ।

**युधिष्ठिरः**—कथय किमर्जुनसुयोधनयोरिति ।

**राक्षसः**—पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमर्जुनसुयोधनयोरिति ।

**युधिष्ठिरः**—न भीमसुयोधनयोरिति ।

**राक्षसः**—वृत्तं तत् ।

(युधिष्ठिरो द्रौपदी च मोहमुपगतौ ।)

**कञ्चुकी**—(सलिलेनासिच्य ।) समाश्वसितु देवो देवी च ।

**चेटी**—समस्ससदु समस्ससदु देवी । (क)

---

(क) समाश्वसितु समाश्वसितु देवी ।

---

यद्भट्टिनी समाज्ञापयति ॥ बलवत्तर इति स्वार्थिकस्तरप् ॥ भवतः कृते इति शेष ॥ **चेटीवाक्ये** । समाश्वसितु देवी ॥ **द्रौपदीवाक्ये** । भगवन्, कथय

---

१. '(सर्वे विषादं नाटयन्ति ।)' इति क्वचिन्नास्ति. २. 'मुने, न खल्विदम्' इति पाठ. ३. 'कथमविदितवृत्तान्त एवमाक्षिपसि' इति पाठः. ४. 'महर्षे, कथय ।' इति पाठः. ५ 'मुहूर्तं तिष्ठ । विश्रम्य सर्वं कथयिष्यामि भवते' इति क्वचित्पाठ ६. 'कथयामि भवते ।'; 'कथयामि भवते न पुनरस्य ।'; 'कथयामि भवते न पुनरस्य वृद्धापसदस्य पुरत. ।' इति पाठान्तराणि ७. 'भगवन्, एतावदेव कथय किं पुनरर्जुनसुयोधनयोरिति' इति पाठ.. ८. 'ननु पूर्वमेव कथित मया प्रवृत्त गदायुद्धमिति । युधि०—न भीमसुयोधनयोरिति ।'' 'ननु कथितमेव मया गदायुद्ध वर्तत इति। युधि०—(सास्रम् ।) ननु भीमसुयोधनयो'।; इति पाठौ. ९ 'वृत्त तदेव । राजा—हा वत्स भीमसेन, क्वासि । प्रयच्छ मे प्रतिवचनम् । द्रौपदी—णाह भीमसेण, कहिं सि । देहि मे पडिवअणम् । (इति मोहमुपागतौ ।) कञ्चुकी—महाराज, समाश्वसिहि समाश्वसिहि । प्रकृतिमापद्यताम् । चेटी—(देवी प्रति ।) समस्ससदु समस्ससदु देवी । राजा—(सञ्ज्ञां लब्ध्वा ।) भगवन्, किं कथयसि' इति वा पाठः. १०. '(सलिलमासिच्य ।)'.

(उभौ सञ्ज्ञां [1]लभेते ।)

**युधिष्ठिरः**—किं कथयसि मुने, वृत्तं भीमसुयोधनयोर्गदायुद्धमिति ।

**द्रौपदी**—[2]भअवं, कहेहि कहेहि किं वुत्तं त्ति । (क)

**राक्षसः**—कञ्चुकिन्, कौ पुनरेतौ ।

**कञ्चुकी**—[3]एष देवो युधिष्ठिरः । [4]इयमपि [5]पाञ्चालतनया ।

**राक्षसः**—आः, दारुणमुपक्रान्तं [6]मया ।

**द्रौपदी**—हा णाह भीम[7]सेण । (इति मोहमुपगता ।) (ख)

[8]**कञ्चुकी**—किं नाम कथितम् ।

**चेटी**—समस्ससदु समस्ससदु देवी । (ग)

[9]**युधिष्ठिरः**—(सास्रम् ।) ब्रह्मन्,

पदे संदिग्ध एवासिन्दुःखमास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागा[10]दियं सुखी ॥ १४ ॥

**राक्षसः**—(सानन्दमात्मगतम् ।) [11]अयमेव मे यत्नः । (प्रकाशम् ।) यदि त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि । न युक्तं बन्धुव्यसनं [12]विस्तरेणाभिधातुम्

(क) भगवन्, कथय कथय किं वृत्तमिति ।

(ख) हा नाथ भीमसेन ।

(ग) समाश्वसितु समाश्वसितु देवी ।

किं वर्तत इति ॥ हा नाथ भीमसेन ॥ **पद इति** । संदिग्ध एव पदे भवदुक्ते युधिष्ठिरो दुःख यथास्यादेवमास्ते तिष्ठति ॥ १४ ॥ **सर्वथेति** । किमपीत्यनेना-

१. 'उपलभेते'. २. 'भअव, कहेहि किं वुत्त त्ति' इति पाठ ३. 'ब्रह्मन्, एष देवो युधिष्ठिर.' इति बहव.. ४. 'एषा'; 'इय', 'इय च'. ५. 'पाञ्चालराजतनया'. ६. 'मया नृशंसेन' इति बहव. पठन्ति. ७. 'भीम'. ८. 'कञ्चुकी—किं नाम कथितम्' इति पाठः पुस्तकान्तरे नास्ति. ९. 'युधि०—ब्रह्मन्', 'युधि०—(सास्रम् ।) ब्रह्मन्, कथय कथय' इति पाठौ. १०. 'अहं सुखी' इति बहव. ११. 'अयं मे यत्नः । (प्रकाशम् ।) यद्येवमवश्यकथनीय संक्षेपेण कथयामि', 'ममाप्ययमेव यत्नः । (प्रकाशम् ।) यदि वावश्यमेव कथनीय तदा संक्षेपतः कथयामि' इति पाठौ. १२. 'अतिविस्तरेण'.

**युधिष्ठिरः**—(अश्रूणि मुञ्चन्[1]।)

सर्वथा कथय ब्रह्मन्सङ्क्षेपाद्विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेष[2] दत्तः क्षणो मया ॥ १५ ॥

**राक्षसः**—श्रूयताम् ।

तस्मिन्कौरवभीमयोर्गुरु[3]गदाघोरध्वनौ संयुगे

**द्रौपदी**[4]—(सहसोत्थाय ।) तदो तदो । (क)

**राक्षसः**—(स्वगतम् ।) कथं पुनरनयोर्लब्धसंज्ञतामपनयामि । (प्रकाशम् ।)

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।
आ[5]लम्ब्य प्रियशिष्यतां तु हलिना [6]संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृति दुःशासनारौ गतः ॥ १६ ॥

**युधिष्ठिरः**—हा वत्स, वृकोदर । (इति मोहमुपगत ।)

**द्रौपदी**—हा णाह भीमसेण, हा मह परिभवपडिआरपरिच्चत्तजीविअ, जडासुरबअहिडिम्बकिम्मीरकीचअजरासंधणिसूदण, सोअन्धिआहरणचाडुआर, देहि[7] मे पडिवअणम् । (इति मोहमुपगता।) **(ख)**

---

(क) ततस्ततः ।

(ख) हा नाथ भीमसेन, हा मम परिभवप्रतीकारपरित्यक्तजीवित, जटासुरबकहिडिम्बकिर्मीरकीचकजरासधनिषूदन, सौगन्धिकाहरणचाटुकार, देहि मे प्रतिवचनम् ।

---

मङ्गल्य निवारयति ॥ १५ ॥ **तस्मिन्निति** । घोर भयानकम् । प्रिय शिष्यो यस्येति प्रियशिष्य । तस्य भाव प्रियशिष्यता । प्रतिकृति प्रतीकारम् । अर्थाद् दु शासनवधस्य । दु शासनारौ भीमे । तथा च भीमस्तेन हत इति भाव ॥१६॥ **द्रौपदीवाक्ये** । हा नाथ, मदीयपरिभवप्रतीकारपरित्यक्तजीवित, हा जटासुरबकहिडिम्बनिसूदन, हा सौगन्धिकाहरणात्मचाटुकार, क्वासि । मे देहि प्रतिव-

---

१. 'विमुञ्चन्'. २ 'एतद्दत्त मनो मया' इति पाठ ३. 'गुरुगदाभीमध्वनौ' इति पाठ . ४ 'द्रौपदी—(लब्धसज्ञा ।) अयि, तदो किम्' इति केचित्पठन्ति. ५ 'व्यालम्ब्य प्रियशिष्यता मुसलिना' इति क्वचित्पाठ'. ६. 'सज्ञा रह: सा कृता', 'शक्ती रहस्याहिता'. ७. 'देहि मे पडिवअणम्' इति क्वचिन्नास्ति.

**कञ्चुकी**—(सास्रम् ।) हा कुमार भीमसेन, धार्तराष्ट्रकुलकमलिनी-प्रालेयवर्ष, [1](ससंभ्रमम् ।) समाश्वसितु महाराजः । भद्रे, समाश्वासय स्वामिनीम् । [2]महर्षे, त्वमपि तावदाश्वासय राजानम् ।

**राक्षसः**—(स्वगतम् ।) आश्वासयामि प्राणान्परि[3]त्याजयितुम् । (प्रकाशम् ।) [4]भो भीमाग्रज, क्षणमेकं चीयतां समाश्वासः । कथाशेषोऽस्ति ।

[5]**युधिष्ठिरः**—(समाश्वस्य ।) महर्षे, किमस्ति कथाशेषः ।

**द्रौपदी**—(प्रतिबुद्धा ।) भअवं, कहेहि कीदिसो कहासेसो त्ति । (क)

**कञ्चुकी**—कथय कथय ।

**राक्षसः**—[6]ततश्च हते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते [7]समग्रसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य प्रत्यग्रक्षतजच्छटा-चर्चितां तामेव गदां [8]भ्रातृहस्तादाकृष्य निवार्यमाणोऽपि संधित्सुना

(क) भगवन्, कथय कीदृशः कथाशेष इति ।

चनम् । अत्र जटासुरो दैत्यभेद । बको दैत्यभेद । सौगन्धिक कमलम् । गङ्गाया सुवर्णकमलाहरणाद्यद्द्रौपद्या आराधन तत्र चाटुकार प्रेम यस्य तादृश ॥ **द्रौपदीवाक्ये** । भगवन्, कथय कीदृश कथाशेष ॥ गति मरणरूपाम् । सवि-

१. '(ससंभ्रमम् ।) महाराज समाश्वसिहि समाश्वसिहि । भद्रे समाश्वासयात्रभवतीम् ।'; 'महाराज समाश्वसिहि समाश्वसिहि । भद्रे समाश्वासयात्रभवतीम् ।' इति पाठौ २. 'महर्षे, त्वमप्याश्वासय महाराजम्' इति बहव ३ 'त्याजयितुम्'. ४. 'अयि भो भीमाग्रज, क्षणमेकमावीयतामाश्वास । कथाशेषोऽप्यस्ति ।' इति बहुपुस्तकाना पाठ . ५ युधि०—(समाश्वस्य ।) महर्षे, किमस्ति कथाशेष. । राक्षस —ततश्च हते'; 'युधि०—(समाश्वस्य ।) भगवन्, कथय किं कथाशेषोऽप्यस्त्येव । द्रौपदी—(प्रतिबुद्धा ।) किं कहासेसो । कञ्चुकी—कथय कथय । चेटी—कहेहि कहेहि । राक्षस.—ततश्च हते' इति पाठौ. ६ 'ततश्च गते तस्मिन्सुक्षत्रिये वीरसुलभा गति' इति वा पाठ'. ७. 'समग्रसगलितमेव भ्रातृवधशोकज बाष्प प्रमृज्य भ्रातृवधशोकादपहाय गाण्डीव प्रत्यग्रक्षतजच्छटाचर्चिता तामेव गदा', 'समग्रसगलितभ्रातृवधशोकज बाष्पमुत्सृज्य भ्रातृवधशोकादपहाय गाण्डीव प्रत्यग्रक्षतजच्छटाचर्चिता तामेव गदा' इति पाठौ. ८. 'भ्रातृहस्ताद्बलादाकृष्य निवार्यमाण सवित्सुना' इति बहव. पठन्ति

[1]वासुदेवेन, आगच्छागच्छेति सोपहासं भ्रमितगदाझङ्कारमूर्छितग[2]म्भीरवचनध्वनिनाहूयमानः कौरवराजेन तृतीयोऽनुजरते किरीटी योद्धुमारब्धः । [3]अकृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनु[4]रतिप्रयतात्स्वरथमारोप्य द्वारका नीतः ।

**युधिष्ठिरः**—साधु भो अर्जुन, [5]तदैव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता । अहं पुनः केनोपायेन [6]प्राणपरित्यागाद्धृदयमुत्साहयिष्ये ।

**द्रौपदी**—हा [7]णाह भीमसेण, ण जुत्तं दाणि दे कणीअसं भादरं असिक्खिदं गदाए दारुणस्स सत्तुणो अहिमुह गच्छन्तं उवेक्खिदुम् । (मोहमुपगता ।) (क)

**राक्षसः**—ततश्चाहं—

**युधिष्ठिरः**—भवतु मुने, किमतःपरं श्रुतेन । [8]हा तात भीमसेन,

(क) हा नाथ भीमसेन, न युक्तमिदानी ते कनीयास भ्रातरमशिक्षित गदाया दारुणस्य शत्रोरभिमुख गच्छन्तमुपक्षितुम् ।

त्सुना सधि कर्तुमिच्छुना । रामो वलभद्र ॥ **द्रौपदीवाक्ये** । हे नाथ भीमसेन, युक्तमिदानी ते कनीयास भ्रातर धनुर्धर गदाशिक्षाविमुखं दारुणस्य शत्रोरभिमुख गच्छन्त निवारयितुम् । अत्र कनीयास कनिष्ठम् ॥ 'कान्तारो

१ 'भगवता वासुदेवेन' २ 'गम्भीरवादध्वनिनाहूयमान. कौरवराजेन सह' इति पाठ. ३ 'तथाऽकृतिनस्तस्य गदाघातान्निधन', 'तथा कृतिनस्तस्य गदाघातान्निधन'; 'अकृतिनस्तस्य गदाया युद्ध' इति पाठान्तराणि. ४. 'प्रयत्नात्'. ५ 'एतावत्प्रतिपन्ना वृकोदरानुगमनपदवी' ६. 'प्राणापगमनमहोत्सवमुत्सहिष्ये' इति बहव. पठन्ति. ७. 'हा णाह, भादुपच्छल, ण जुत्त भादर असिक्खिद गदाए सत्तुणो मुह गच्छन्त उवेक्खिदुम्' इति बहुभि. समादृत पाठ· ८. 'हा तात भीमसेन, मम कान्तारव्यसनबान्धव, जतुगृहविपत्समुद्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासधविजयैकमल्ल, हा कीचकसुयोधनानुजद्रुमोन्मूलनप्रभञ्जन, हा द्यूतपण, मम शरीरस्थितिपरिखेदशङ्कासूदन, हा मदाज्ञासंपादक, हा कौरववनदावानल'; 'हा तात भीमसेन, जतुगृहसमुद्रतरणयानपात्र ('जतुगृहसमुद्रतरणयानपोत्र' इत्यपि पाठ.) हा किर्मीरहिडिम्बासुरजरासधजयमल्ल, हा कीचकसुयोधनानुजकमलिनीकुञ्जर, हा द्यूतप्रणयिन्, मम शरीरस्थितिपरिखेदशङ्कासूदन, हा मदाज्ञासपादक, हा कौरववनदावानल' इति पाठौ.

कान्तारव्यसनबान्धव, हा मच्छरीरस्थितिविच्छेदकातर, [1]जतुगृहविपत्समुद्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासंधविजयमल्ल, हा [2]कीचकसुयोधनानुजकमलिनीकुञ्जर,

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया [3]सा तदा
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता ।
किं नामापकृतं मया तदधिकं [4]त्वय्यद्य यद्गम्यते
त्यक्त्वा नाथ सबान्धवं सपदि मां प्रीतिः क्व ते साऽधुना ॥ १७॥

**द्रौपदी**—([5]सञ्ज्ञामुपलभ्योत्थाय च ।) महाराअ, किं एदं वट्टइ । (क)

**युधिष्ठिरः**—कृष्णे, [6]किमन्यत् ।

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसंधि[7]भेदाशनिः ।
[8]गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥ १८ ॥

---

(क) महाराज, किमेतद्वर्तते ।

---

वर्त्म दुर्गमम्' इत्यमर । शरीरस्थितिर्जीवनम् । यानपात्र 'वोहित' इति ख्यातम् । 'यानपात्र तु पोत ' इत्यमर· । किर्मीरो दैत्यभेद । **निर्लज्जस्येति** । 'पणे द्यूते दुरोदरम्' इत्यमर । हे वत्स, त्वया मम तदा दासताङ्गीकृतासीत् । कि नामेति । नाम प्रकाशय कि तदित्यर्थ ।अतोऽविक त्वयि मयाद्य किमपकृत तत्प्रकाशयेत्यर्थ ॥ १७ ॥ **द्रौपदीवाक्ये** । हे महाराज, कि नामैतद्वर्तते ॥ **स इति** । मगधाधिपो जरासध । गदापरिघ. पाणौ यत्र तादृशेन । पाणि कर । भुजयुगेनेति लक्षणे तृतीया । किल प्रसिद्धौ ॥ १८ ॥ **द्रौपदीवाक्ये** ।

---

१. 'हा जतुगृहसतरणपोतपते, हा बकहिडिम्बकिर्मीरजटासुरजरासधजयमल्ल' इति पाठः. २. 'कीचकसुयोधनानुजशतकमलिनीकुञ्जर', 'कीचकसुयोधनानुजकुलकमलिनीकुञ्जर'; 'कीचकसुयोधनानुजकमलवनप्रालेय' इति पाठान्तराणि ३. 'सीदता'. ४. 'त्वय्यद्य निर्वत्सल त्यक्त्वाऽनाथमबान्धव सपदि मा येनासि दूर गत.' इति बहुपुस्तकाना पाठ . ५. '(सञ्ज्ञामुपलभ्योत्थाय च ।)' इत्यत्र '(उत्थाय ।)' इति बहव पठन्ति. ६. 'किमन्यत्' इति क्वचिन्नास्ति. ७. 'भङ्गाशनि.'. ८. 'गदापरिघपाणिना' इति जगद्धरसंमतः पाठः.

**द्रौपदी**—णाह भीमसेण, तुए किल मे केसा संजमिदव्वा। ण जुत्तं वीरस्स खत्तिअस्स पडिण्णादं सिढिलेदुम्। ता पडिवालेहि मं जाव उवसप्पामि। (पुनर्मोहमुपगता।) (क)

**युधिष्ठिरः**—(आकाशे।) अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारः। मामेकमनाथ विलपन्तमुत्सृज्य क्वापि गतः। तात जरासंधशत्रो, किं नाम वैपरीत्यमेतावता कालेनाल्पायुषि त्वयि समालोकितं जनेन। अथवा मयैव बहूपलब्धम्।

दत्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे।
स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
वत्सैतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥ १९ ॥

मुने, किं कथयसि। ('तस्मिन्कौरवभीमयोः' (६।१६) इत्यादि पठति।)

---

(क) नाथ भीमसेन, त्वया किल मे केशाः संयमितव्याः। न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम्। तत्प्रतिपालय मां यावदुपसर्पामि।

---

हा नाथ भीमसेन, त्वया किल मम केशाः संयमितव्याः। न युक्तमिदानीं भवतो वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम्। तत्प्रतिपालय मां क्षणमात्रं यावत्त्वामनुगच्छामि॥ पृथे पृथानामधेयि। तात मान्य। जरासंधशत्रो भीम। बहु स्वल्पायु सूचकम्। तदेवाह—**दत्वेति**। करदो राजभागदाता। प्रीयसे प्रीतो भवसि। स्थित्यर्थं वासार्थम्। मत्स्यराजो विराट। 'सूदस्तु सूपवत्सूपकारेऽपि व्यञ्जनेऽपि च' इति विश्व। हे वत्स, एतानि चिह्नानि ते विनाशशीलस्य दृष्टानि। तथा च मम भाग्यदोषाद्गुणा एव ते दोषा वृत्ता इति भाव ॥ १९ ॥ 'कामपालो

---

१ 'द्रौपदी—(आकाशे दत्तदृष्टि।) णाह भीमसेण, तुए किल मे केसा सजमिदव्वा', 'द्रौपदी—(आकाशे दत्तदृष्टि।) णाह, सअ किल मे केसा सजमिदव्वा', 'द्रौपदी—णाह, सअ किल मे केसा सजमिदव्वा', 'द्रौपदी—णाह, मे केसा सजमिदव्वा' इति पाठान्तराणि २. '(इति पुनर्मोहमुपगता।)'; '(मोहमुपगता।)'. ३ 'युधि०—(आकाशे दत्तदृष्टि.।) अम्ब पृथे, ननु श्रुतोऽय तव पुत्रस्य समुदाचार। मामेकमनाथमकरुणो विलपन्तमुत्सृज्य क्वापि गत.' इति वा पाठ.. ४ 'त्वयि' इति क्वचिन्नास्ति ५. 'वत्सैतानि विनश्वरस्य सहसा स्पष्टानि चिह्नानि ते'; 'तान्येतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते' इति पाठौ. ६. 'इति पठति'.

**राक्षसः**—एवमेतत् ।

**युधिष्ठिरः**—धिगसद्भागधेयानि[1] । भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रातः,

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन[2] ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः[3]
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्[4] ॥२०॥

(द्रौपदीमुपगम्य ।) अयि पाञ्चालि, उत्तिष्ठ[5] । समानदुःखावेवावां भवावः । मूर्छया किं मामेवमतिसंधत्से[6] ।

**द्रौपदी**—(लब्धसञ्ज्ञा ।) बन्धेदु[7] णाहो दुज्जोहणरुधिलाद्देण हत्थेण दुस्सासणविमुक्कं[8] मे केसहत्थम् । हञ्जे बुद्धिमदिए, तव पच्चक्खं एव्व णाहेण पडिण्णादम् । (कञ्चुकिनमुपेत्य ।) अज्ज, किं[9] संदिट्ठं दाव मे[10] देवेण

(क) बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दुःशासनविमुक्तं मे केशहस्तम् । हञ्जे बुद्धिमतिके, तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम् । आर्य, किं संदिष्टं

---

हलायुध' इत्यमरः । **ज्ञातीति** । सुभद्राभ्रातृत्वेन विशेषणात्सुभद्राद्वारा ज्ञातिप्रीतिर्दर्शिता । धर्मो मनसि न कृतः । स च वीरयोः समदृष्टिता । रूढमुपचितम् । शिष्ययोर्भीमसुयोधनयोः ॥ २० ॥ अतिसंधत्से अनन्वितं करोषि ॥ **द्रौपदीवाक्ये** । बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दुःशासनविमुक्तं मम केशहस्तम् । हञ्जे बुद्धिमतिके, तवापि प्रत्यक्षमेव प्रतिज्ञातं नाथेन । आर्य, किं संदिष्टं

---

१. 'युधि०—अथवा धिगस्मद्भागधेयानि । भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रात', 'युधि०—धिङ्मम भागधेयानि । (आकाशमवलोकयन् ।) भगवन्सुभद्राभ्रात, कामपाल'; 'युधि०—धिङ्मम भाग्यानि । (आकाशमवलोकयन् ।) भगवन्कामपाल, कृष्णाग्रज', 'युधि०—विगलन्ति भागधेयानि । भगवन्कामपाल, कृष्णाग्रज' इति पाठान्तराणि २ 'नानुजस्यानुजे मे' इति बहवः पठन्ति ३. 'प्रेमबन्ध' ४. 'विमुखो मन्दभाग्ये मयि त्वम्', 'विगुणो मन्दभाग्ये मयीत्थम्'. ५. 'उत्तिष्ठोत्तिष्ठ' ६ 'अभिसंधत्से' ७. 'बन्धेदु बन्धेदु'. ८ 'दुस्सासणमोइद' ९. 'अज्ज, किं' इति क्वचिन्नास्ति १०. 'मे देवकीणन्दणेण केसरअणा आरम्भीअदु त्ति', 'मे देवेण देवकीणन्दणेण पुणो वि केसरअणा आरम्भीअदु त्ति'.

देवकीणन्दणेण पुणो वि केसबन्धणं आरम्भीअदु त्ति। ता उवणेहि मे पुप्फदामाइं[1]। विरएहि दाव कबरीम्। करेहि भअवदो णाराअणस्स[2] वअणम्। ण क्खु सो अलीअं संदिसदि[3]। अहवा कि मए सतत्ताए[4] भणिदम्। अचिरगदं[5] अज्जउत्तं अणुगमिस्सम्। (युधिष्ठिरमुपगम्य[6]।) महाराअ, आदीवअ[7] चिदाम्। तुमं वि खत्तधम्मं अणुबन्धन्तो एव्व णाहस्स जीविदहरस्स अहिमुहो होहि। अहवा जं दे रोअदि[8]। (क)

**युधिष्ठिरः**—युक्तमाह पाञ्चाली[9]। कञ्चुकिन्, क्रियतामियं तपस्विनी चितासंविभागेन[10] सह्यवेदना। ममापि सज्जं धनुरुपनय[11]। अलमथवा धनुषा।

तस्यैव देहरुधिरोक्षितपाटलाङ्गी-[12]
मादाय संप्रति[13] गदामपविध्य चापम्[14]।

---

तावन्मे देवेन देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति। तदुपनय मे पुष्पदामानि। विरचय तावत्कबरीम्। कुरु भगवतो नारायणस्य वचनम्। न खलु सोऽलीक संदिशति। अथवा किं मया सतप्तया भणितम्। अचिरगतमार्यपुत्रमनुगमिष्यामि। महाराज, आदीपय चिताम्। त्वमपि क्षत्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव। अथवा यत्ते रोचते।

---

तेन देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति। तदुपनय मे पुष्पदामानि तावत्। विरचय मे कबरीम्। कुरु भगवतो नारायणस्य वचनम्। न खलु सोऽलीक सदिशति। अथवा कि मया सतप्तया भणितम्। अचिरगतमार्यपुत्रमनुगमिष्ये। महाराज, आदीप्यता चिता। त्वमपि क्षत्रियधर्माननुबध्नन्नेव तस्य नाथजीवितहरस्य शत्रोरभिमुखो भव। अथवा यत्तेनोच्यते ॥ **तस्येति।**

१ 'फुल्लदामाई'; 'पुल्लपुप्फदामाइ' २ 'पुरिसोत्तमस्स' ३ 'णहि अलीअ मन्तेदि मो' इति पाठ ४. 'अदिमतत्ताए' ५ 'अदूरगद', 'अदूर गद' ६ 'उपेत्य'. ७ 'आदीवअ मे चिदाम्। तुम वि खत्तधम्म अणुवट्टन्तो एव्व' इति बहुपुस्तकाना पाठः. ८. 'अहवा ज दे रोअदि' इति क्वचिन्नास्ति. ९. 'याज्ञसेनी'. १०. 'चितासविधानेन हृतवेदना' इत्यपि पाठ.. ११. 'उपानय'. १२. 'पीवराङ्गीम्' १३. 'सयति'. १४. 'अपहाय चापम्', 'अपविद्धचाप'

भ्रातृप्रियेण कृतमद्य यदर्जुनेन
श्रेयो ममापि हि तदेव कृतं जयेन ॥ २१ ॥

**राक्षसः**[2]—राजन्, रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् ।

**कञ्चुकी**[3]—धिङ्मुने, राक्षससदृशं हृदयं भवतः ।

**राक्षसः**[4]—(सभय स्वगतम् ।) किं ज्ञातोऽहमनेन । (प्रकाशम् ।) भोः[5] कञ्चुकिन्, [6]तयोर्गदया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः । जानामि च तयोर्[7]गदायां भुजसारम् । दुःखितस्य [8]पुनरस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि ।

**युधिष्ठिरः**—(बाष्पं [9]विसृजन् ।) साधु महर्षे, साधु । [10]सुस्निग्धमभिहितम् ।

**कञ्चुकी**—महाराज, किं[11] नाम शोकान्धतया देवेन[12] देवकल्पेनापि प्राकृतेनेव त्यज्यते [13]क्षात्रधर्मः ।

**युधिष्ठिरः**—आर्य जयंधर,

---

तस्यैव भीमस्य । उक्षित सिक्तम् । पाटल रक्तम् । अपविध्य त्यक्त्वा ॥ २१ ॥ भुजसारमित्यन्त कञ्चुकिने कथनम् ॥ सुस्निग्ध हितम् ॥ देवकल्पेन देवतुल्येन ॥

---

१ 'जयेन किं मे' इति क्वचित्पाठः २. 'राक्षसः—(सविषादमात्मगतम् ।) कथं गच्छति । भवत्वेव तावत् । (प्रकाशम् ।) राजन्, रिपुजयविमुखं यदि ते चेतस्तदा वरमत्रैव प्राणत्यागः । किं तत्र गमनेन' इति पुस्तकान्तरे पाठः. ३ 'कञ्चुकी—(सकोपम् ।) ब्रह्मन्, अलं कथितेन । निश्चितं नृशंस राक्षसमत्र भवतो हृदयम्', 'कञ्चुकी—(सरोपम् ।) धिङ्मुनिजनासदृशं राक्षसस्य सदृशं भवता व्याहृतम्' इति पाठौ. ४. 'राक्षसः—(सभय स्वगतम् ।) हा धिक्कष्टम् । किं ज्ञातोऽहमनेन', 'राक्षसः—(स्वगतम् ।) किं ज्ञातोऽहमनेन' इति पाठौ. ५. 'भोः कञ्चुकिन्, एतद्ब्रवीमि' इति बहवः ६. 'तयोर्गदाया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः'; 'तयोर्गदायुद्धं वृत्तमेवार्जुनसुयोधनयोः'. ७. 'गदायाः'; 'गदायुद्धे'. ८. 'पुनरस्य' इति क्वचिन्नास्ति ९. 'उत्सृज्य', 'विमुञ्चन्'. १० 'स्निग्ध'; 'सुश्लिष्ट'. ११. 'किं नाम' इति क्वचिन्नास्ति. १२. 'देवकल्पेनापि देवेन त्वया' इत्यपि पाठः १३. 'क्षत्रधर्मः'.

शक्ष्यामि[1] तौ परिघपीवरबाहुदण्डौ
विक्तेशशक्रपुरदर्शितवीर्यसारौ[2] ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ[3]
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ॥ २२ ॥

अयि पाञ्चालराजतनये, मद्दुर्नयप्राप्तशोच्यदशे, यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः ।

**द्रौपदी**—अज्ज[4], करेहि दारुसंचअम् । पज्जलीअदु चिदा । तुवरदि मे हिअअ णाधं पेक्खिदुम् । (सर्वतोऽवलोक्य ।) कहं ण को वि णाधेण विणा महाराअस्स वअणं करेदि । हा णाह भीमसेण, तं एव्व एदं राअउलं तुए विरहिदं पडिअणो वि संपदं परिहरदि । (क)

**राक्षसः**—सदृशमिदं भरतकुलवधूनां यत्पत्युरनुमरणम्[5] ।

---

(क) आर्य, कुरु दारुसचयम् । प्रज्वाल्यता चिता । त्वरते मे हृदय नाथ प्रेक्षितुम् । कथ न कोऽपि नाथेन विना महाराजस्य वचन करोति । हा नाथ भीमसेन, तदेवेद राजकुल त्वया विरहित परिजनोऽपि साप्रतं परिहरति ।

---

**शक्ष्यामीति** । वित्तेश कुबेर । भीमार्जुनौ रिपु च द्रष्टु शक्ष्यामि । कि तु न शक्ष्यामि ॥ २२ ॥ **द्रौपदीवाक्ये** । महाराज, महाराज, आनाय्यता तावद्दारुसचय । सप्रज्वाल्यता चिता । त्वरते मम हृदय नाथ प्रेक्षितुम् । कथ न कोऽपि नाथेन विना महाराजस्य वचन करोति । हा नाथ भीमसेन, तदेव राजकुलमिदानी त्वया विरहित परिजनोऽपि महाराज परिभवति ॥ समिन्धयामि

---

१. 'शक्ष्यामि नो'; 'शक्नोमि तौ' २. 'वित्तेशशक्रवरुणाधिकवीर्यवन्तौ', 'वित्तेशशक्रवरुणाधिकवज्रसारौ' ३ 'परिवर्तमानौ'. ४ 'अज्ज, करेहि दारुसचअम् । पज्जलीअदु चिदा । तुवरदि मे हिअअ नाव पेक्खिदुम् । (सर्वतोऽवलोक्य ।) कह ण को वि महाराअस्स वअण करेदि । हा णाह, अज्ज तुए विणा महाराओ परिअणेण वि परिहवीअदि'; 'अज्ज, करेहि दारुसचअम् । कह ण को वि महाराअस्स वअण करेदि । हा णाह, अज्ज एसो तुए विणा महाराओ परिअणेण वि परिहवीअदि' इति पाठौ. ५. 'भरतकुलवधूना पत्यनुमरणम्'; 'भरतकुलवधूना पत्यनुसरणम्'.

**युधिष्ठिरः**—[1]महर्षे, न [2]कश्चिच्छृणोति तावदावयोर्वचनम् । [3]तदिन्धनप्रदानेन प्रसादः क्रियताम् ।

**राक्षसः**—मुनिजनविरुद्धमिदम् । (स्वगतम् ।) [4]पूर्णो मे मनोरथ । यावदनुपलक्षितः [5]समिन्धयामि वह्निम् । (प्रकाशम् ।) राजन्, न शक्नुमो [6]वयमिहैव स्थातुम् । (इति निष्क्रान्त ।)

**युधिष्ठिरः**—[7]कृष्णे, न कश्चिदस्मद्वचनं करोति । भवतु । स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि ।

**द्रौपदी**—तुवरदु तुवरदु महाराओ । (क)

(नेपथ्ये कलकल ।)

**द्रौपदी**—(सभयमाकर्ण्य ।) महाराअ, कस्स वि एसो [8]बलदप्पिदस्स विसमो सङ्खणिग्घोसो सुणीअदि । अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बन्धो तदो [9]विलम्बीअदु । (ख)

**युधिष्ठिरः**—न खलु विलम्ब्यते । उत्तिष्ठ ।

(इति सर्वे परिक्रामन्ति ।)

**युधिष्ठिरः**—अयि पाञ्चालि, [10]अम्बाया· सपत्नीजनस्य च किंचित्संदिश्य [11]निवर्तय परिजनम् ।

(क) त्वरता त्वरतां महाराजः ।

(ख) महाराज, कस्याप्येष बलदर्पितस्य विषमः शङ्खनिर्घोषः श्रूयते । अपरमप्यप्रिय श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यताम् ।

दीपयामि ॥ **द्रौपदीवाक्ये** । त्वरता त्वरता महाराज । महाराज, कस्याप्येष बलदर्पितस्य विषम· शङ्खनिर्घोष. श्रूयते । तद्यद्यपर किमपि श्रोतव्य तदा

१. 'महर्षे' इति क्वचिन्नास्ति. २. 'कश्चिदिदानी शृणोति'. ३ 'इन्धनप्रदानेन प्रसाद कर्तुमर्हसि' इनि पाठः. ४. 'पूर्णा मे मनोरथा.' इति बहव:. ५. 'समीपेऽहमिन्धनमादीपयामि' इत्यपि पाठः ६. 'वयमिहैव स्थातुम्', 'वयमवस्थातुमिति'. ७. 'कृष्णे, न कश्चिदिदानीमेतत्करिष्यति । भवतु । स्वयमेव शुष्कदारुसचय कृत्वा चितानलेनात्मानमात्मनादीपयामि' इति केचित्पठन्ति. ८. 'तेजोबलदप्पिदस्स विसमो सङ्खणिग्घोसो'; 'तेजोबलदप्पिदस्स णिग्घोसो'; 'तेजोबहलदप्पिदस्स णिग्घोसो'. ९. 'विलम्बीअदि'. १०. 'तत्रभवत्या अम्बायाः'. ११.'निवार्यतां परिजनः' इति पाठः

**द्रौपदी**—[1]महाराअ, अम्बाए एव्वं संदिसिस्सम्—'जो सो [2]बअ-हिडिम्बकिम्मीरजडासुरजरासंधविजअमल्लो वि दे मज्झमपुत्तो मम हदासाए पक्खवादेण परलोअं गदो' त्ति । (क)

**युधिष्ठिरः**—भद्रे बुद्धिमतिके, उच्यतामसद्वचनादम्बा ।

येनासि तत्र जतुवेश्मनि दीप्यमाने
निर्[3]वाहिता सह सुतैर्भुजयोर्[4]बलेन ।
तस्य प्रियस्य बलिनस्तनयस्य पाप-
माख्यामि तेऽम्ब कथयेत्कथमीदृगन्य ॥ २३ ॥

आर्य जयंधर, [5]त्वया सहदेवसकाशं गन्तव्यम् । वक्तव्यश्च [6]तत्रभवान्माद्रेय. कनीयान्सकलकुरुकुलकमलाकरदावानलो युधिष्ठिर परलोक-

(क) महाराज, अम्बायै एव संदेक्ष्यामि—'यः स बकहिडिम्बकिर्मीरजटासुरजरासधविजयमल्लोऽपि ते मध्यमपुत्रो मम हताशायाः पक्षपातेन परलोक गतः' इति ।

विलम्ब्यताम् । अत्र निर्घोष शब्द ॥ **द्रौपदीवाक्ये** । महाराज, अम्बायै एतत्संदेष्टव्यम्—'योऽसौ बकहिडिम्बकिर्मीरजटासुरजरासधविजयमल्लो मध्यमपुत्रस्ते स मम हताशाया. पक्षपातेन परलोक गत' इति ॥ **येनेति** । निर्वाहिता रक्षिता । ते आख्यामि तुभ्य कथयामि । अन्यो मत्त इति शेष । मदन्य' क ईदृश दु ख कथयेत् । कि तु न कोऽपीत्यर्थ ॥ २३ ॥ प्रियश्चासावनुजश्चेति विग्रह । 'बह्वच्यनियम' इति प्रियस्यैव पूर्वनिपात । अर्थात्सहदेवम् । अप्रति-

१. 'एव्व महाराअ, अम्बाए संदिसिस्सम्' इति वा पाठ २ 'बअहिडिम्बकिम्मीरजरासधजअमल्लो' इति पाठ. ३. 'निर्वासिता' ४. 'कोऽन्यस्तवाम्ब कथयेत्कथमीदृशस्य' इति बहुसमत पाठ; 'आख्यामि तेऽम्ब कदन कथमीदृशस्य'; 'आख्यामि तेऽम्ब नृपशुः कथमीदृगन्यत्' इत्यपि पाठौ ५ 'त्वमपि सहदेवसकाश गच्छ'; 'त्वमपि सहदेवसकाश गत्वा', 'त्वयापि सहदेवसकाश गत्वा'. ६. 'तत्रभवान्पाण्डुकुलबृहस्पतिर्माद्रेय. कनीयानस्माक स कुरुकुलकमलाकरदावानलः', 'तत्रभवान्पाण्डुकुलबृहस्पतिर्माद्रेय. कनीयानस्माक स कुरुकुलकाननदावानल.'; 'तत्रभवान्पाण्डुकुलबृहस्पतिर्वैमात्रेय. कनीयानस्माक सकलकुरुकुलकमलाकरदावानलः', 'तत्रभवान्पाण्डुकुलबृहस्पतिर्वैमात्रेयः सकलकुरुकुलकमलाकरवाडवानल.' इति पाठान्तराणि.

मभिप्रस्थितः [1]प्रियानुजमप्रतिकूलं सततमा[2]शंसनीयमसंमूढं व्यसनेऽभ्युदये च [3]भवन्तम[4]विरलमालिङ्ग्य शिरसि चाघ्रायेदं प्रार्थयते—

मम हि वयसा [5]दूरेणाल्पः श्रुतेन समो भवा-
न्[6]सहजकृपया बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।
शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥ २४ ॥

अपि च । [7]बालिशचरितस्य नित्याभिमानिनोऽस्मत्सदृशहृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम् । नानुगन्तव्यासत्पदवी । त्वया हि वत्स,

विस्मृत्यास्मान्[8]श्रुतिविशदया प्रज्ञया सानुजांश्च
पिण्डान्पाण्डोरुदकपृषतानश्रुगर्भान्प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ २५ ॥

गच्छ जयधर, अस्मच्छरीरस्पृष्टिकया [9]शापितेन भवताऽकालहीनमिदमवश्यमावेदनीयम् ।

---

कूलमायत्तम् । आशसनीय प्रत्याशार्हम् । विपत्तावमूढममुग्धम् । आघ्राय परिचुम्ब्य । **ममेति** । दूरेणाधिकेन । श्रुतेनाध्ययनेन । सहजा स्वाभाविकी कृपा दया यस्या तया । 'धीरो मनीषी ज्ञ. प्राज्ञ ' इत्यमर । मुकुलौ पाणी कृत्वाऽञ्जलि बद्ध्वा । अतोऽर्थय इद याचे । मयि स्नेहो विरलतां कृशत्व नेय । अतो जलप्रद पितरि भवेत्यन्वय ॥ २४ ॥ बालिशो मूर्ख. । **विस्मृत्येति** । सानुजानस्मान्प्रज्ञया विस्मृत्य पाण्डोरुदकपृषतान्प्रदातु त्वया शरीर रक्षणीयमित्यन्वयः । 'पृषन्ति बिन्दुपृषता पुमास ' इत्यमर. । श्रुतिरध्ययनम् । वसतिर्वास ॥ २५ ॥ शापितेन मदङ्गशपथवता । अकालहीनमसमयेऽयोग्यम् ॥ **द्रौपदी-**

---

१. 'प्रियमनुजमनुकूल' इति पाठः. २. 'आशसनीयमममूढ' इत्यत्र 'आसन्न' इति क्वचित्पाठ.. ३ 'धृतिमन्त भवन्त' इति बहुसमत पाठ·. ४. 'अचिर' ५. 'दूरेण त्व'. ६ 'कृतसहजया बुद्ध्या', 'सहजकृतया बुद्ध्या'. ७ 'बालिशचरितस्य विद्याभिमानिनो मद्धृदयसारस्य', 'बाल्ये सवर्धितस्य नित्यमभिमानिनोऽस्मत्सदृशहृदयसारस्य'; 'बाल्ये सवर्धितस्य नित्यमभिमानिनोऽश्मसदृशहृदयसारस्य' इति पाठान्तराणि. ८. 'श्रुतविशदया स्वाग्रजौ चात्मबुद्ध्या क्षीणे पाण्डावुदकपृषतानश्रुगर्भान्प्रदातुम्' इति पाठः. ९. 'शापितोऽसि । त्वयाऽकालहीनमिदमवश्यमावेदनीयम्' इति पाठः.

**द्रौपदी**—हला बुद्धिमदिए, भणाहि मह वअणेण पिअसहीं सुभद्दाम्—'[1]अज्ज वच्छाए उत्तराए आवण्णसत्ताए चउत्थो मासो वट्टदि। सव्वधा णाविउले तं णिक्खिवेसि । कदा वि इदो परलोअगदस्स [2]ससुरउलस्स अम्हाणं वि सलिलबिन्दुदो भविस्सदि' त्ति। (क)

**युधिष्ठिरः**—([3]सास्रम् ।) भोः कष्टम् ।

[4]शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूल[5]पर्यन्तबन्धे ।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥ २६ ॥

[6]साधु। इदानीमध्यवसितं करणीयम्। (कञ्चुकिनमवलोक्य ।)[7]आर्य जयंधर, स्वशरीरेण शापितोऽसि तथापि न गम्यते ।

---

(क) हला बुद्धिमतिके, भण मम वचनेन प्रियसखीं सुभद्राम्—'अद्य वत्साया उत्तराया आपन्नसत्वायाश्चतुर्थो मासो वर्तते । सर्वथा नाभीकुले तां निक्षिपसि । कदापीत. परलोकगतस्य श्वशुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति' इति ।

---

**वाक्ये** । हञ्जे बुद्धिमतिके, भणिष्यसि मम वचनेन सुभद्रा प्रियसखीम्—'अद्य वत्साया उत्तराया आपन्नसत्वायाश्चतुर्थो मासो वर्तते। तदेनां शीघ्रमात्मनो नाभीकुल सत्य प्रवेक्ष्यसि । कदाप्येतेनापि परलोकगतस्यास्माक श्वशुरकुलस्योदकबिन्दुर्भविष्यति'। अत्रापन्नसत्वा गर्भवती। नाभीकुल पितृकुलम् ॥ **शाखेति** । रोधोऽवरोध' । आधिक्यमिति यावत् । स्कन्धस्तरुप्रकाण्ड । पर्यन्तबन्व परिवारानुबन्धनम् । ईदृशि तरौ दग्धे सति तस्याङ्कुर आशाबन्धमय जन कुरुत इत्यन्वय । 'आशाबन्ध समाश्वासे तथा मर्कटजालके' इति विश्वः ।

---

१. 'वच्छाए उत्तराए चउत्थो मासो पडिवण्णस्स गब्भस्स । तुम एव्व कुलपडिट्ठाअव सावहाण रक्ख त्ति। कदा वि इदो लोअगदस्स ससुरउलस्स अह्माण अ सलिलबिन्दुदो भविस्सदि त्ति' इति पुस्तकान्तरे पाठ. २. 'गुरुउलस्स'. ३.'(सास्रम् ।)' इति क्वचिन्नास्ति ४. 'शाखारोह–'. ५. 'पर्यङ्कबन्धे'. ६. 'द्रौपदि, माधयेदानीमध्यवसितम् ।' इति बहुसमत' पाठः, क्वचिदय पाठो नास्ति. ७. 'आर्य जयवर, अस्मच्छरीरेण शापितोऽसि', 'जयधर, अस्मच्छरीरेण शापितोऽसि', 'आर्य, स्वशरीरेण शपितोऽसि' इति पाठान्तराणि.

**कञ्चुकी**—(साक्रन्दम् ।) हा देव पाण्डो, तव सुतानामजातशत्रु-भीमार्जुननकुलसहदेवानामयं दारुणः [१]परिणामः । हा देवि कुन्ति, [२]भोजराजभवनपताके,

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्र[३]नलिनीव्यालोलने दन्तिनः ।
आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
[४]दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला ॥ २७ ॥

(इति रुदन्निष्क्रान्त ।)

**युधिष्ठिरः**—[५]जयंधर, जयंधर,

(प्रविश्य)

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—[६]वक्तव्यमिति ब्रवीमि । न पुनरेतावन्ति भागधेयानि नः । [७]यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता ।

---

छाययार्थी छायाप्रार्थक ॥ २६ ॥ **भ्रातुरिति** । ते भ्रातुर्वसुदेवस्य । शौरिगुरुणा कृष्णज्येष्ठेन । व्यालोलना व्याघट्टना । तस्य भीमस्य । आचार्येण गुरुणा । हलिना वलेनाथ च हलवाहकेन । उन्मत्तेनातिक्षीबेनाथ चोन्मादिना ॥ २७ ॥

---

१. 'दशापरिणाम.'. २. 'भोजकुलपताके'. ३. 'नलिनव्यालोलने दन्तिन'; 'नलिनीव्यालोडनादन्तिन.' इति पाठौ. ४. 'दग्ध त्वत्सुतकानन तव पुरी यच्छायया शीतला', 'दग्ध त्वत्सुतकानन तव मही यच्छायया शीतला'; 'दग्ध तत्सुतकानन तव मही यस्याश्रयाच्छीतला', 'दग्ध तत्सुकानन समभवद्यस्याश्रयः शीतल.' इति पाठान्तराणि. ५ 'जयधर जयधर' इत्यत्र 'आर्य जयधर' अथवा 'जयधर' इति पाठ. ६. 'वक्तुमिच्छामि । न पुनरेतावन्ति भागधेयानि युष्माकम् ।' इति बहुषु पुस्तकेषु पाठः. ७ 'यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तदासौ वक्तव्योऽस्मद्वचनाद्भवता', 'यदा कदाचिद्विजयी स्याद्वत्सो मेऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता'; 'कदाचिद्विजयी स्यादर्जुनस्तदासौ वक्तव्यो भवता' इति पाठान्तराणि.

हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
अतः क्रोधः कार्यो न खलु यदि च प्राणिषि ततो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम् ॥ २८ ॥

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**युधिष्ठिरः**—(अग्निं दृष्ट्वा सहर्षम् ।) कृष्णे, ननूद्धतशिखाहस्ताहूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हुताशनस्तत्रेन्धनीकरोम्यात्मानम् ।

**द्रौपदी**—पसीददु पसीददु महाराओ इमिणा अपच्छिमेण पणएण । अहं दाव अग्गदो पविसामि । (क)

**युधिष्ठिरः**—सहितावेवाभ्युदयमुपभोक्ष्यावहे ।

**चेटी**—हा भअवन्तो लोअवाला, परित्ताअह परित्ताअह । एसो

(क) प्रसीदतु प्रसीदतु महाराजोऽनेनापश्चिमेन प्रणयेन । अहं तावदग्रतः प्रविशामि ।

(ख) हा भगवन्तो लोकपालाः, परित्रायध्वं परित्रायध्वम् । एष खलु

**हलीति** । हेतुः कारणम् । प्राणिषि जीवसि । गच्छेर्गमिष्यसि । क्षात्रपदवीं क्षत्रियपथम् । पुनर्मा गा न गमिष्यसि । 'मा गाः' इति माङ्योगे आशंसायां लुङ् । 'न माङ्योगे' इत्यटो निषेधः ॥ २८ ॥ **द्रौपदीवाक्ये** । प्रसीदतु प्रसीदतु महाराजोऽपश्चिमेनानेन प्रणयेन । अहं तावदग्रतः प्रविशामि । अत्रापश्चिमेन प्रथमेन सत्येन वा । 'प्रणयः प्रेम्णि याच्ञायाम्' इति धरणिः ॥ **चेटीवाक्ये** ।

१. 'इह'. २ 'मयि च प्रेम भवता' इत्यपि पाठः. ३. 'यथा' ४. '(अग्निं दृष्ट्वा सहर्षम् ।)' इत्यत्र '(सहर्षम् ।)' इति पुस्तकान्तरे पाठः. ५ 'कृष्णे, ननूद्धत–' इत्यत्र 'कृष्णे, नन्वयमुद्धत–', 'ननूद्धत–' इति वा पाठः. ६. 'शिखाहूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हव्यभुग्' इति क्वचित्पाठः. ७ 'यदा तदा चेन्धनीकरोम्यात्मानं', 'तत्रेन्धनमात्मानं करिष्ये' इति पाठौ. ८ 'पसीददु पसीददु महाराओ मम इमिणा', 'पसीददु महाराओ मम इमिणा' ९ 'अहं एव्व दाव अग्गदो प्पविसामि'; 'अहं एव्व अग्गदो गमिस्सम्' १० 'युधि०—यद्येव सहितावेवाभ्युदयमुपभोक्ष्यावहे', 'युधि०—यद्येव सहितावेवाभ्युदयमपि भोक्ष्यावहे' इति पाठौ. ११. 'हा भवन्तो लोअवाला, परित्ताअह । सोमवम्सराएसी अअं क्खु राआ राअसूअसतप्पिदहुदवहो' इति वा पाठः.

क्खु सोमवंसराएसी राअसूअसंतप्पिदहव्ववाहो खण्डवसंतप्पिद-हुदवहस्स किरीडिणो जेट्ठो भादा सुगहीदणामहेओ महाराअजुहिट्ठिरो। [1]एसा वि पाञ्चालराअतणआ देवी वेदि[2]मज्झसंभवा जण्णसेणी। [3]दुवे वि णिक्करुणजलणस्स प्पवेसेण इन्धणीहोन्ति । ता परित्ताअह अज्जा, परित्ताअह। कधं ण को वि परित्ताअदि। (तयोरग्रत पतित्वा।) किं ववसिदं देवीए देवेण अ। (ख)

**युधिष्ठिरः**—अयि बुद्धिमतिके, यद्व[4]त्सलेन प्रियानुजेन विना [5]सदृशं तत्। उत्तिष्ठोत्तिष्ठ भद्रे, उदकमु[6]पानय।

---

सोमवशराजर्षी राजसूयसतर्पितहव्यवाहः खाण्डवसतर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः। एषापि पाञ्चालराजतनया देवी वेदिमध्यसभवा याज्ञसेनी। द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः। तत्परित्रायध्वमार्याः, परित्रायध्वम्। कथं न कोऽपि परित्रायते। किं व्यवसित देव्या देवेन च।

---

भगवन्तो लोकपाला, परित्रायध्व परित्रायध्वम्। एष खलु सोमवशराजर्षी राज-सूयसतर्पितहव्यवाह खाण्डववनादीपनजननस्य किरीटिनो ज्येष्ठभ्राता सुगृहीत-नामधेयो महाराजयुधिष्ठिर। एषापि पाञ्चालराजतनया देवी वेदिमध्यसभवा याज्ञसेनी। द्वावप्येतौ निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवत। तत्परित्रायध्व-मार्यो, परित्रायध्वम्। कथ न कोऽपि परित्रायते। किं व्यवसित देवेन देव्या च॥

---

१. 'एसा देवी पाञ्चालराअकुलदेवदा' इति पाठ. २ 'जण्णवेदि-मज्झसभवा'. ३. 'दुवे वि सरीरेण णिक्करुणस्स कालाणलस्स इन्धणीहोन्ति। परित्ताअह परित्ताअह। (तयोरग्रत. पतित्वा।) कि ववसिद देवीए देवेण अ' इत्यपर पाठ' ४. 'नाथेन'. ५. 'सदृशम्। तदुत्तिष्ठोत्तिष्ठ। सलिलमुपानय', 'सदृशं तत्। उत्तिष्ठोत्तिष्ठ। सलिलमुपानय'; 'सदृश तत्। भद्रे, उत्तिष्ठोत्तिष्ठ। सलिलमुपनय' इति पाठान्तराणि. ६. 'उपानय' इत्यस्मादनन्तर 'चेटी—ज देवो आणवेदि। (इति निष्क्रम्य पुन प्रविश्य च।) जेदु जेदु महाराओ। युधि०—पाञ्चालि, त्वमपि तावत्स्वपक्षपातिनो ('तावत्त्वत्पक्षपातिन.' इत्यपि पाठ..) वृकोदरस्य प्रियस्यार्जुनस्योदकक्रिया कुरु। द्रौपदी—महाराओ एव्व करेदु। अहं उण जलण पविसिस्सम्। युधि—अनतिक्रमणीय लोकवृत्तम्। भद्रे, उदकमुपानय।' इत्यधिकः पाठो बहुषु पुस्तकेषु वर्तते.

(चेटी तथा करोति ।)

**युधिष्ठिरः**—([1]पादौ प्रक्षाल्योपस्पृश्य च ।) एष तावत्सलिलाञ्जलिर्गाङ्गेयाय भीष्माय गुरवे [2]प्रपितामहाय शान्तनवे । अयमपि पितामहाय विचित्रवीर्याय । (सास्रम् ।) [3]तातस्याधुनावसरः । [4]अयं तावत्स्वर्गस्थिताय सुगृहीतनाम्ने पित्रे पाण्डवे ।

अद्यप्रभृति [5]वारीदमसक्तो दुर्लभं पुनः ।
तात [6]माद्र्यम्बया सार्धं [7]मया दत्तं निपीयताम् ॥ २९ ॥

एतज्जलं जलजनी[8]लविलोचनस्य
भीम[9]प्रियस्य मम चाप्यविभक्तमस्तु ।
[10]एकं क्षणं विरम वत्स पिपासितोऽपि
पातुं त्वया सह जवाद[11]यमागतोऽस्मि ॥ ३० ॥

अथवा सुक्षत्रियाणां गतिमुपगतं [12]वत्समहमुपगतोऽप्यकृती द्रष्टुम् । [13]वत्स भीमसेन,

---

उपस्पृश्याचम्य । गाङ्गेयाय भीष्माय । शान्तनवे शान्तनुनाम्ने । **अद्येति** । हे तात, मया दत्तमेतज्जल माद्र्यम्बया सह निपीयताम् ॥ २९ ॥ **एतदिति** । जलजस्य लीला विलासो यत्र तत् । भीमप्रियस्य प्रीतिविषयभीमस्य । अविभक्त साधारणम् । हे वत्स भीम । विरम विरक्तो भव । त्वया सह पातुं वेगादयमहमागतोऽस्मीत्यन्वयः ॥ ३० ॥ गति स्वर्गम् ।

---

१. 'मुख'. २ 'प्रपितामहाय शन्तनवे पितामहाय विचित्रवीर्याय', 'प्रपितामहाय शान्तनवे पितामहाय चित्रवीर्याय'; 'अयमपि प्रपितामहाय शान्तनवे पितामहाय विचित्रवीर्याय' इति पाठान्तराणि. ३. 'तात, तवाधुनावसर.', 'तातस्येदानीमवसर'. ४. 'अयमपि तत्रभवते स्वर्गस्थाय गुरवे सुगृहीतनाम्ने पित्रे पाण्डवे' इति बहुसमतः पाठ.. ५ 'वा दत्त'. ६. 'माद्याम्बया', 'त्वयाम्बया' ७. 'एतद्दत्त निपीयताम्' इति बहुपुस्तकाना पाठ. ८. 'नीलविलोचनाय', 'लीलविलोचनस्य'. ९. 'भीमस्य तस्य मम चाप्यविभक्तमस्तु'; 'भीमाय भोस्तव ममाप्यविभक्तमस्तु' इति पाठौ. १०. 'एक क्षण तु विषहस्व पिपासितोऽपि' इति वा पाठ . ११. 'अह'. १२. 'वत्समह मृतोऽप्यकृती द्रष्टुम्', 'वत्स किमहमुपागतोऽपि प्राप्स्यामि द्रष्टु भीमसेनम्', 'वत्समहमुपगतोऽपि न पापः प्राप्नोमि द्रष्टु भीमम्' इति पाठान्तराणि. १३. 'तात भीम'.

मया पीतं पीतं[1] तदनु भवताम्बा[2]स्तनयुगं
मदुच्छिष्टै[3]र्वृत्तिं जनयसि रसैर्वत्सलतया ।
वितानेष्वप्येवं[4] तव[5] मम च सोमे[6] विधिरभू-
न्निवापाम्भः पूर्वं पिबसि कथमेवं[7] त्वमधुना ॥ ३१ ॥

कृष्णे, त्वमपि देहि सलिलाञ्जलिम् ।[8]

**द्रौपदी**—हञ्जे बुद्धिमदिए, उवणेहि[9] मे सलिलम् । (क)

(चेटी तथा करोति ।)

**द्रौपदी**—(उपसृत्य जलाञ्जलिं पूरयित्वा ।) महाराअ,[10] कस्स सलिलं देह्मि । (ख)

**युधिष्ठिरः**—

तस्मै[11] देहि जलं कृष्णे सहसा गच्छते दिवम् ।
अम्बापि येन गान्धारीरुदितेन[12] सखीकृता ॥ ३२ ॥

---

(क) हञ्जे बुद्धिमतिके, उपनय मे सलिलम् ।

(ख) महाराज, कस्य सलिलं ददामि ।

---

**मयेति** । तदनु तत्पश्चात् । रसैर्दुग्धैः । वृत्तिं वर्तनम् । वितान यज्ञः । 'क्रतुविस्तारयोरस्त्री वितानम्' इत्यमरः । साम्यो विधिः समः प्रकारः । साम्य इति चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । 'साम्ये विधिः' इति पाठे साम्ये तुल्यत्वे विधिरित्यर्थः । 'सोमे विधिः' इति पाठे सोमलताद्रवपानेऽयं प्रकार इत्यर्थः । निवापः पितृदेयम् ॥ ३१ ॥ **द्रौपदीवाक्ये** । हञ्जे बुद्धिमतिके, उपनय मे सलिलम् ॥ महाराज, कस्य सलिलं ददामि ॥ **तस्मा इति** । सहसा शीघ्रं जलं देहीत्यन्वयः । येन गान्धारीरुदितेनाम्बापि सखीकृता रोदनवती कृतेत्यर्थः॥३२॥

---

१. 'पूर्वं' २ 'अम्बस्तनयुगं'. ३. 'मयोच्छिष्टै' ४. 'वितानेष्वेव वा'. ५. 'तव च मम'. ६ 'साम्यो विधिः', 'साम्ये विधिः', 'सोऽयं विधिः'. ७ 'मम वत्स'. ८. 'कृष्णे, देहि जलाञ्जलिं तत्रभवते भीमाय' इति वा पाठः. ९. 'देहि मे उदअम्' इति बहवः पठन्ति. १०. 'महाराअ, कस्स सलिलं देह्मि' इत्यत्र 'कस्स जलं देह्मि' इति पुस्तकान्तरे पाठः. ११. 'तस्मै देहि जलं पूर्वं सहसा गच्छते दिवम्', 'तस्मै देवि जलं देहि सहसा यो गतो दिवम्' इति पाठौ. १२. 'गान्धार्या रुदितेन सखीकृता'; 'गान्धार्या रुदितेन समीकृता', 'गान्धार्या रुदितेषु सखीकृता'.

**द्रौपदी**—[1]णाह भीमसेण, परिअणोवणीदं उदअं सग्गगदस्स दे पादोदअं भोदु । (क)

**युधिष्ठिरः**—[2]फाल्गुनाग्रज,

असमाप्तप्रतिज्ञे[3]ऽपि याते त्वयि महाभुजे ।
मुक्तकेश्यैव [4]दत्तस्ते प्रियया सलिलाञ्जलिः ॥ ३३ ॥

**द्रौपदी**—उट्ठेहि महाराअ, दूरं गच्छदि दे भादा । (ख)

**युधिष्ठिरः**—(दक्षिणाक्षिस्पन्दन सूचयित्वा ।) पाञ्चालि, निमित्तानि मे [5]कथयन्ति संभावयिष्यसि वृकोदरमिति ।

**द्रौपदी**—महाराअ, सुणिमित्तं भोदु । (ग)

(नेपथ्ये [6]कलकल. ।)

(प्रविश्य सम्भ्रान्त·)

**कञ्चुकी**—परित्रायतां परित्रायतां [7]महाराजः । एष खलु दुरात्मा

(क) नाथ भीमसेन, परिजनोपनीतमुदक स्वर्गगतस्य ते पादोदक भवतु ।

(ख) उत्तिष्ठ महाराज, दूर गच्छति ते भ्राता ।

(ग) महाराज, सुनिमित्त भवतु ।

**द्रौपदीवाक्ये** । नाथ भीमसेन, परिजनोपनीतमुदक स्वर्गगतस्य ते पादोदक भवतु ॥ फाल्गुनोऽर्जुन । **असमाप्तेति** । मुक्तोऽबद्ध ॥ ३३ ॥ **द्रौपदीवाक्ये** । महाराज, उत्तिष्ठोत्तिष्ठ । दूर गच्छति मे भर्ता ॥ सभावयिष्यसि प्राप्स्यसि ॥ **द्रौपदीवाक्ये** । महाराज, सुनिमित्त भवतु ॥

१. 'णाह भीमसेण, परिअणोवणीद सग्गगदस्स दे पादोदअ भोदु एदम्'; 'णाह, परिजणोवणीदं सग्गगदस्स पादोदअ भविस्सदि एदम्' इति पाठौ २. 'तात फाल्गुनाग्रज'. ३ 'अपि याते त्वयि ममानुजे', 'अपि जाते त्वयि ममानुजे'; 'अस्तं याते त्वयि महाभुजे', 'अस्त गते त्वयि महाभुजे' इति नानापुस्तकाना नानाविधः पाठः. ४. 'ते दत्त. प्रियया सलिलाञ्जलिः', 'दत्तस्ते प्रिययाद्य जलाञ्जलि.' इति पाठौ. ५. 'कथयन्त्यहत वृकोदरम् । द्रौपदी—सुणिमित्त भोदु ।'; 'कथयन्ति स्वय सभावयामि वृकोदरमिति । भवतु शीघ्रतरमनुगच्छामि । द्रौपदी—सुणिमित्त भोदु ।', 'कथयन्ति सभावयसि वृकोदरमिति । भवतु । शीघ्र दहनमुपसर्पाव. । द्रौपदी—आः, पज्जलिदो भअव हुदवहो ।' इति पाठान्तराणि. ६. 'महान्कलकल.'; 'महाकलकलः'. ७. 'महाराज'.

कौरवापसदः[1] क्षतजाभिषेकपाटलिताम्बरशरीरः[2] समुच्छ्रितदिग्धभीषणगदाशक्तिरुद्यतकालदण्ड[3] इव कृतान्तो[4]ऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते[5] ।

**युधिष्ठिरः**—हा दैव, ते[6] निर्णयो जातः । हा गाण्डीवधन्वन्, (इति मुह्यति ।)

**द्रौपदी**—हा अज्जउत्त, हा[7] मम सअंवरसअंगाहदुल्ललिद, पिअं भादुअं अणुगदोसि[8] । ण उण महाराअं इमं दासजणं अ[9] । (इति मोहमुपगता ।) (क)

**युधिष्ठिरः**[10]—हा वत्स सव्यसाचिन्, हा त्रिलोचनाङ्गनिष्पेषमल्ल, हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक, हा[11] बदर्याश्रममुनिद्वितीयतापस, हा द्रोणाचार्यप्रियशिष्य, हा अस्त्रशिक्षाबलपरि-

---

(क) हा आर्यपुत्र, हा मम स्वयवरस्वयग्राहदुर्ललित, प्रिय भ्रातरमनुगतोऽसि । न पुनर्महाराजमिम दासजन च ।

---

क्षतज रक्तम् । अम्बर वास । दिग्धो व्याप्त । गदाशक्तिः शक्तिरस्त्रभेदस्तद्वद्गदेत्यर्थ ॥ **द्रौपदीवाक्ये** । हा नाथ भीमसेन, हा मम स्वयंवरस्वयग्राहदुर्ललित, भ्रातृप्रिय, परलोकमनुगतोऽसि । न पुनर्महाराजमिम च दासजनम् । अत्र स्वयंवररूपस्वयग्राह इत्यर्थ ॥ सव्यसाचिन्नर्जुन । निष्पेषो यन्त्रणम् । निवातेति । निवातकवचनामकसन्नाहानयननि शत्रूकृतसुरलोक इत्यर्थ । बदर्याश्रमो बदरिकाश्रम । द्वितीयतापस प्रथमस्तत्पतिर्द्वितीयोऽयमित्यर्थ ।

---

१. 'कौरवाधम.'. २. 'क्षतजाभिषेकपाटलीकृताम्बर ', 'क्षतजाभिषिक्तपाटलिताम्बरः'. ३.'रक्तभीषणगदापाणिरुद्यत्कालदण्ड.', 'रक्तभीषणगदाशनिरुद्धतकालदण्ड.' ४.'अन्तकः' ५. 'अभिवर्तते' इत्यस्मादनन्तर 'तत्परित्रायता परित्रायतां महाराज' इति क्वचिदधिक. पाठः ६ 'तेन'. ७ 'हा मम सअवरसअगहकुडुम्बिअ, धणंजअ'; 'मम सअवरसअगाहकुडुम्बिअ, धणजअ', 'मम सअवरसअगहकुडुम्ब, धनजअ' इति नानाविध पाठ.. ८. 'भादुअ सभावेसि', 'भादुअ विओदर संभावेसि' इति पाठौ. ९. 'इम दासजणं अ' इति क्वचिन्नास्ति १०. 'युधि०—हा असदृशमल्ल, हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक', 'युधि०—हा असदृशमल्ल, हा निवातकवचोद्धरण, हा निष्कण्टकीकृतामरलोक' इति पाठौ ११. 'हा बदर्याश्रममुनिद्वितीयतापस, हा साहसिक, हा द्रोणाचार्यवत्सल, हा वत्सार्जुन' इति क्वचित्पाठः । यत्रैष पाठो दृश्यते तत्र 'हा अस्त्रशिक्षा–'इत्यस्मादारभ्य 'राजहस' इत्यन्तं नास्ति.

तोषितगाङ्गेय, हा राधेयकुलकमलिनीप्रालेयवर्ष, हा गन्धर्वनिर्वासित-
[1]दुर्योधन, हा पाण्डवकुलकमलिनीराजहंस,

तां वत्सलाम[2]नभिवाद्य विनीतमम्बां
गाढं च मामनुपगुह्य मयाप्यनुक्तः ।
एतां स्वयंवरवधूं [3]दयितामदृष्ट्वा
दीर्घप्रवासम्[4]यि तात कथं गतोऽसि ॥ ३४ ॥

(मोह[5]मुपगत ।)

[6]**कञ्चुकी**—(चेटीं प्रति ।) इदानीं भोः कष्टम् । एष कौरवाधमो यथेष्टमिहैव प्रवर्तते । सर्वथायं प्रवेशकालः। चितासमीपमुपनयाम्यत्र-भवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । भद्रे, त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वाऽवाप्नुहि । एवमवस्थिते महाराजेऽस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा ।

[7]**चेटी**—परित्ताहअ परित्ताहअ अज्जा । (क)

(क) परित्रायध्व परित्रायध्वमार्याः ।

**तामिति** । तामम्बां विशिष्यानभिवाद्य गतोऽसीत्यन्वयः । वत्सलां वात्सल्यवतीम् । अनुपगुह्यानालिङ्ग्य । अनुक्तोऽस्वीकृतः । दीर्घप्रवासं मरणम् । तातानुकम्प्य । 'तातोऽनुकम्प्ये जनके' इति विश्वः ॥ ३४ ॥ **चेटीवाक्ये** । परित्रायध्व परित्रायध्वमार्या ॥ गृध्रादीनां भूयिष्ठ प्रचुरो

१. 'सुयोधन'. २ 'अनभिवन्द्य'. ३. 'सदृशीमदृष्ट्वा', 'सदृशीमपृष्ट्वा' ४. 'अयि वत्स'; 'अपि वत्स' ५. 'इति मोहमुपागत.', 'इति मोहमुपगतः'. ६ 'कञ्चुकी—भोः कष्टम् । एष दुरात्मा सुयोधनो यथेष्टमित एवाभिवर्तते । सर्वथा सप्रत्ययमेव कालोचितः प्रतीकार. । भद्रे बुद्धिमतिके, चितासमीपमुपनयात्रभवती पाञ्चालराजतनयाम् । (चेटीं प्रति ।) भद्रे, त्वमपि देव्या भ्रातर धृष्टद्युम्न नकुलसहदेवौ वा ब्रूहि । अथवा एवमेव स्थिते महाराजेऽस्तमितयोभीमार्जुनयो क नु परित्राणम्', 'कञ्चुकी—भो. कष्ट कष्टम् । इदानीमय दुरात्मा कौरवाधमो यथेष्टमित एवाभिवर्तते । सर्वथा सप्रत्ययमेव कालोचित. प्रतीकारः । चितासमीपमुपनयाम्यत्रभवती पाञ्चालराजतनयाम् । (चेटीमुद्दिश्य ।) त्वमपि भद्रे, देव्या भ्रातर धृष्टद्युम्न नकुलसहदेवौ च यथाचारमाक्रन्द । अथवा एवमवस्थे महाराजे अस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा' इति पाठौ. ७. इद चेटीवाक्यं बहुषु पुस्तकेषु न दृश्यते.

(नेपथ्ये कलकलानन्तरम् ।)

भो भोः, समन्तपञ्चकसंचारिणः [1]क्षतजासवमत्तयक्षराक्षसपिशाचगृध्रजम्बुकवायसभूयिष्ठा विरलयोधपुरुषाः, कृतमस्मद्दर्शन[2]त्रासेन । [3]कथयत भवन्तः कस्मिन्नुद्देशे याज्ञसेनी संनिहितेति । [4]कथयाम्युपलक्षणं तस्याः ।

[5]ऊरू करेण परिघट्टयतः [6]सलीलं
दुर्योधनस्य पुरतोऽपहृताम्बरा या ।
[7]दुःशासनेन कचकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥ ३५ ॥

**कञ्चुकी**—[8]हा देवि यज्ञवेदिसंभवे, [9]परिभूयसे संप्रत्यनाथा कुरुकुलकलङ्केन ।

**युधिष्ठिरः**—([10]सहसोत्थाय ।)पाञ्चालि, न भेतव्यं न भेतव्यम् ।

---

निलयो गृह येषु ते तथा । उपलक्षण परिवाचकम् । **ऊरू इति** । ऊरू निजोरुयुग रोषेण परिघट्टयतस्ताडयत । इद तु रोषसूचकम् । 'कच केश शिरोरुह.' इत्यमर । कर्षणमाकर्षणम् । भिन्नमौलिर्विदारितधम्मिल्ल । 'मौलि. किरीटे धम्मिल्ले' इति विश्व । प्रदेशेऽस्तीति शेष । कथयत तमिति शेष· ॥ ३५ ॥ अर्थसूचनरूपा धृतिकेयम् । 'अन्त पटीप्रविष्टैर्यत्क्रियतेऽर्थस्य सूचनम् । धृतिकार्थप्रकाशनम् ॥' इति भरत. । इह सादननामावसमसधि । यदाह—'बीज-

---

१ 'क्षतजास्वादमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बुकोलूकवायसभूयिष्ठावशिष्टविरलाश्च योधा.' इत्यपि पाठ.. २. 'सत्रासेन'. ३. 'कथयत कस्मिन्नुद्देशे याज्ञसेनी संनिहिता' इति बहव. पठन्ति. ४. 'कथयाम्युपलक्षण तस्या ' इत्येष पाठ क्वचिन्नास्ति। 'कि कथयाम्युपलक्षण तस्या·', 'कि कथयामि तस्या लक्षण', 'कथयाम्युपलक्षणानि तस्या ' इत्यपि पाठान्तराणि नानापुस्तकेषु दृश्यन्ते ५. 'ऊरु'. ६. 'सलज्जा', 'सरोषम्'. ७. 'दु शासनस्य करकर्षणभिन्नमौलि.' इति बहुसमत. पाठः. ८. 'हा देवि यज्ञवेदिसभवे' इत्यत्र 'देवि याज्ञसेनि' अथवा 'भो देवि याज्ञसेनि' इति पाठः क्वचिदुपलभ्यते. ९. 'परिभूयसे सम्प्रत्यनाथेवानेन कुरुकुलकलङ्केन', 'परिभूयसे कुरुकुलकेतुना दुर्योधनहतकेन' इति पाठौ. १०. '(सहसोत्थाय ।)' इत्यत्र '(सहसोत्थाय । सावष्टम्भम्।)' इति पुस्तकान्तरे पाठः.

(ससंभ्रमम् ।) कः कोऽत्र भोः । संनिषङ्गं मे धनुरुपनय । दुरात्मन्दुर्योधनहतक, आगच्छागच्छ । अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण । अन्यच्च रे कुरुकुलाङ्गार,

प्रियमनुजमपश्यंस्तं जरासंधमल्लं
कुपितहरकिरातद्वेषिणं तं च वत्सम् ।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो
न च पुनरपहर्तुं बाणवर्षैस्तवासून् ॥ ३६ ॥

(ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः ।)

**भीमसेनः**—ननु भोः समन्तपञ्चकसंचारिणः,

रक्षो नाहं न भूतं रिपुरुधिरजलाल्हादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥ ३७ ॥

कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ।

---

कार्योपगमन सादन समुदीरितम्' ॥ **प्रियमिति** । हर किरात इव हरकिरात । किरातरूपी हर इत्यर्थ । त वत्समर्जुनम् । प्राणितु जीवितुम् । त्वमिवेति व्यतिरेके दृष्टान्त । यथा त्व जीवितु शक्तस्तथा नाहमित्यर्थात् । तवासून्बाणवर्षै पुनरपहर्तु न शक्तोऽस्मि । कि तु शक्तोऽस्मि । न. शिरश्चालने ॥ ३६ ॥ **रक्ष इति ।** आल्हादित सिक्त । जलनिधिगहन इत्यत्र पूर्वनिपातविधेरनित्यत्वमेव समाधानम् । यद्भवद्भिर्लीनै स्थीयते । त्रासफलमेतत् ॥ ३७ ॥ **द्रौपदीवाक्ये ।**

---

१. '(ससभ्रमम् ।)' इति बहुषु पुस्तकेषु नास्ति २ 'क कोऽत्र भो.' इति क्वचिन्नास्ति. ३. 'उपनीयता मे सज्ज धनु. । दुरात्मन्दुर्योधनहतक, आगच्छ ।' इति वा पाठ'. ४ 'सभूत' इति बहुपुस्तकाना पाठ ५ 'जरासंधशत्रु'. ६ 'ननु पुनरपहर्तुं', 'न तु पुनरपहर्तुं'. ७ 'बाणवर्षेण वाऽसून्' ८. 'क्षतजसिक्तसर्वाङ्गो रौद्रवेशो भीमसेन.' इति क्वचित्पाठः. ९. 'भीम०—(उद्धत परिक्रामन् ।) भो भोः समन्तपञ्चकसचारिणः सैनिका, कोऽयमावेग ' इति बहुपुस्तकाना पाठः. १०. 'रक्षो नाहं न भूत.'; 'नाह रक्षो न भूतः' ११ 'प्लाविताङ्ग ', 'आप्लाविताङ्गः', 'अभ्युक्षिताङ्ग.'. १२. 'भुक्तशेषा ' इति दर्पणधृतः पाठ'. १३ 'किम्' इति बहव. पठन्ति. १४. 'कथयन्तु भवन्त कस्मिन्नुद्देशे पाञ्चाली तिष्ठति' इति पाठः क्वचिन्न वर्तते.

**द्रौपदी**[१]—(लब्धसज्ञा ।) परित्ताअदु परित्ताअदु महाराओ। (क)

**कञ्चुकी**—देवि पाण्डुस्नुषे, उत्तिष्ठोत्तिष्ठ । संप्रति[२] झटिति चिताप्रवेश एव श्रेयान् ।

**द्रौपदी**—(सहसोत्थाय[३] ।) कहं ण संभावेमि अज्जवि चिदासमीवम् । (ख)

**युधिष्ठिरः**—कः कोऽत्रभोः । सनिषङ्गं[४] धनुरुपनय। कथं न कश्चित्परिजनः । भवतु । बाहुयुद्धेन[५] संभावनविहस्तमेनं गाढमालिङ्ग्य ज्वलनमभिपातयामि । (परिकर[६] बध्नाति ।)

**कञ्चुकी**—देवि[७] पाण्डुस्नुषे, संयम्यन्तामिदानीं नयनपथावरोधिनो[८] दुःशासनावकृष्टा मूर्धजाः । अस्तमिता संप्रति प्रतीकाराशा । द्रुतं[९] चितासमीपं संभावय ।

**युधिष्ठिरः**—कृष्णे[१०], न खल्वनिहते तस्मिन्दुरात्मनि[११] दुर्योधने संहर्तव्याः केशाः ।

---

(क) परित्रायता परित्रायतां महाराजः ।

(ख) कथ न संभावयाम्यद्यापि चितासमीपम् ।

---

परित्रायता परित्रायता महाराज. ॥ 'जघन स्त्रीपुर कटि '। उदररोदनशाला (?)। 'क्लीबे तु जघन पुर ' इत्यमर ॥ निषङ्गस्तूणीर । सभावना व्यापार· । विहस्त करशून्य विह्वल वा । 'परिकर पर्यङ्कपरिवारयो·' इत्यमर ॥ न खलु नैवेत्यर्थ ॥

---

१. इद द्रौपदीवाक्य केषुचित्पुस्तकेषु नास्ति. २. 'संप्रति झटिति चिताप्रवेश एव श्रेयान्' इति क्वचिन्नास्ति ३. '(सहसोत्थाय।)' इत्यत्र '(उत्थाय।)' इति क्वचित्पाठः. ४. 'उपनीयता सनिषङ्ग धनुः। (परिवृत्यावलोक्य च।) कथ न कश्चिच्छृणोति परिजनः' इति पुस्तकान्तरे पाठः ५ 'बाहुयुद्धेनैव दुरात्मान गाढमालिङ्ग्य' इति बहुसमत· पाठः. ६. '(इति परिकर बध्नाति)'. ७. 'देवि पाण्डुस्नुषे' इति बहुषु पुस्तकेषु नास्ति. ८. 'नयनोपरोधिन.' इति बहवः पठन्ति ९. 'चितासमीपमेव द्रुततरं सभावय' इति बहुसमत. पाठः १०. 'कृष्णे' इति क्वचिन्नास्ति. ११. 'तस्मिन्दुर्योधनहतके' इत्यपि पाठ..

**भीमसेनः**—पाञ्चालि, न[1] खलु मयि जीवति संहर्तव्या दुःशासन-विलुलिता वेणिरात्मपाणिना । तिष्ठतु तिष्ठतु । स्वयमेवाहं संहरामि ।

(द्रौपदी[2] भयादपसर्पति ।)

**भीमसेनः**—तिष्ठ[3] तिष्ठ भीरु, क्वाधुना गम्यते । (इति केशेषु ग्रहीतुमिच्छति ।)

**युधिष्ठिरः**—(वेगाद्भीममालिङ्ग्य[4] ।) दुरात्मन्, भीमार्जुनशत्रो, सुयोधनहतक[5],

आशैशवादनुदिनं जनितापराधः
मत्तो[6] बलेन भुजयोर्हतराजपुत्र[7] ।
आसाद्य[8] मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पापः[9] ॥ ३८ ॥

---

**आशैशवादिति ।** भुजयोर्बलेन मत्त । हतो राजपुत्रो भीमादिर्येन स तथा । सकट मध्यम् । त्व जीवन्सन्पदात्पदमप्यवश्य न प्रयासि न प्रयास्यसि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यति लट् । यद्वा । तत्कालीनक्रियाया वर्तमानत्वाद्वर्तमाने लट् ॥ ३८ ॥ दुर्लक्षा दुर्ज्ञेया व्यक्तिश्चिह्न यस्य स तथा ॥

---

१. 'न खलु मयि जीवति सहर्तव्या दु शासनविरूपिता वेण्यात्मपाणिना ।'; 'न खलु न खलु मयि जीवति सहर्तव्या दु शासनविरूपिता वेण्यात्मपाणिना ।', 'न खलु मयि जीवति सहर्तव्या दु'शासनविलुलिता वेण्यात्मपाणिभ्याम् ।', 'न खलु सयमितव्यात्मपाणिना दु.शासनकृष्टा वेणी ।', 'न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेण्यात्मपाणिभ्याम् । तिष्ठ तिष्ठ । अहमेव सहरामि ।', 'न खलु मयि जीवति सहर्तव्या दु शासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठ । स्वयमेवाहं सहरामीति ।' इति नानाविधः पाठ २ '(द्रौपदी भयादपसर्पति ।)' इति क्वचिन्नास्ति । क्वचिदेतत्स्थाने '(द्रौपदी भयात्परिक्रामति ।)' इत्येष पाठोऽस्ति. ३ 'अये भीरु, क्वेदानी गम्यते' इति वा पाठ. ४ '(बलाद्भीममालिङ्ग्य ।)', '(भीममालिङ्ग्य ।)'. ५. 'दुर्योधनहतक, क्वेदानी यास्यसि' इति पुस्तकान्तरे पाठ' ६ 'क्षीबो मदेन' इति बहुसमत. पाठ.. ७ 'हतराजपुत्र' इत्यपि पाठ ८ 'आसाद्य सकटमिद भुजपञ्जरस्य जीवन्प्रयासि न पदात्पदमप्यवश्यम्' इति जगद्धरेण धृत. पाठ. । 'आसाद्य चान्तरमिद भुजपञ्जरस्य जीवन्प्रयासि न पदात्पदमप्यय मे' इत्यपि क्वचित्पाठ.. ९. 'पाप'.

**भीमसेनः**—कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति। देव अजातशत्रो, भीमार्जुनगुरो, यथैवाज्ञापयसि न तथैवैतत्।

**कञ्चुकी**—(उपसृत्य। सहर्षम्।) महाराज, वर्धसे। अयं खल्वायुष्मान्भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्षव्यक्तिः। अलमधुना सदेहेन।

**चेटी**—देवि, णिवट्टीअदु णिवट्टीअदु। एसो क्खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं कादुं तुमं एव्व अण्णेसेदि। (क)

**द्रौपदी**—हञ्जे, किं मं अलीअवणेहिं आसासेसि। (ख)

(क) देवि, निवर्त्यतां निवर्त्यताम्। एष खलु पूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति।

(ख) हञ्जे, किं मामलीकवचनैराश्वासयसि।

**चेटीवाक्ये**। देवि, निवर्त्यतां निवर्त्यताम्। एष खलु परिपूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहरणं कर्तुं त्वामेवान्विष्यते॥ **द्रौपदीवाक्ये**। हञ्जे, किं माम-

१. 'भीमसेन—(सस्मितम्।) अये, कथं दुर्योधनशङ्कया क्रोधान्मां निर्दयमालिङ्गत्यार्यः। देव अजातशत्रो, भीमार्जुनगुरो, यथैवाज्ञापयसि न तथैवैतत्।'; 'भीमसेनः—अये, कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति। आर्य, प्रसीद प्रसीद।'; 'भीमसेन—अये, कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति।' इति पाठान्तराणि २. 'कञ्चुकी—(उपसृत्य। सहर्षम्।) महाराज, वर्धसे। अयं खलु भीमसेन', 'कञ्चुकी—(उपसृत्य। सहर्षम्।) महाराज वर्धसे वर्धसे। अयं खलु कुमारभीमसेनः।'; 'कञ्चुकी—(निरूप्य। सहर्षम्।) कथं कुमारो भीमसेनः। दिष्ट्या वर्धसे महाराज। अयं खल्वायुष्मान्भीमसेन', 'कञ्चुकी—(उपगम्य। सहर्षम्।) महाराज वञ्च्यसे। अयं खल्वायुष्मान्भीमसेन'; 'कञ्चुकी—(निरूप्य। सहर्षम्।) भीमसेन एवायम्। देव, वर्धतेऽयं खल्वायुष्मान्कुमारो भीमसेन' इति नानापुस्तकेषु नानाविधः पाठः. ३. 'सुयोधनक्षतजारुणितसकलशरीराम्बर', 'दुर्योधनक्षतजारुणीकृतसर्वशरीर' ४. 'दुर्लक्ष्यव्यक्तिः'. ५ 'चेटी—(द्रौपदीमालिङ्ग्य।) समस्ससदु समस्ससदु देवी। भट्टिणि, अअं क्खु पूरिदपडिण्णाभारो णाहो दे', 'चेटी—(द्रौपदीमालिङ्ग्य।) भट्टिणि, एसो क्खु पूरिदपडिण्णाभरो णाहो देवीए', 'चेटी—(द्रौपदीमालिङ्ग्य।) देवि, पूरिदपडिण्णाभरो णाहो देवीए' इति पाठान्तराणि ६ 'एव्व' इति बहुषु पुस्तकेषु नास्ति. ७. 'अलीअवअणेण समासासेसि' इति जगद्धरसमतः पाठः. ८. 'आसासेसि' इत्यस्मादनन्तरं 'कञ्चुकी—महाराज, वञ्च्यसे। (इति पूर्वोक्तमेवाभिधत्ते।)' इति क्वचिदधिकः पाठः.

युधिष्ठिरः—[1]जयंधर, किं कथयसि नायमनुजद्वेषी दुर्योधनहतकः।

भीमसेनः—[2]देवे अजातशत्रो, [3]कुतोऽद्यापि दुर्योधनहतकः ।

[4]मया हि तस्य दुरात्मनः

भूमौ [5]क्षिप्तं शरीरं निहितमिदम[6]सृक्चन्दनाभं निजाङ्गे

[7]लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमु[8]र्व्या ।

भृत्या मित्राणि योधाः [9]कुरुकुलमखिलं दग्धमेतद्रणाग्नौ

नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शे[10]षम् ॥३९॥

---

लीकवचनेन समाश्वासयसि ॥ भूमाविति । तस्येदमसृङ्मयाङ्गे निहितम् । भूम्या सह श्रीस्त्वयि निषण्णा । भृत्या. कुरूणामिति शेष । एवमितरत्रापि । यदेक शेषमवशिष्ट नाम दुर्योधनस्य ब्रवीषि । शेषशब्दोऽय कर्मण्यजन्तो वाच्य.

---

१ ‘जयधर, अपि सत्य नाय मम वैरी सुयोधनहतक’ इति बहुसमत पाठ । ‘जयधर, अपि सत्य नायमनुजवैरी सुयोधनहतक.’; ‘जयधर. कि कथयसि नायमनुजद्वेषी दुरात्मा दुर्योधनहतकः’, ‘कञ्चुकिन्, कि वदसि नायमर्जुनवैरी दुर्योधनहतक’, ‘युधि०—(स्वैर मुक्त्वा । भीमसेनमनवलोकयन् ।) जयधर, कि कथयसि नायमनुजद्वेषी सुयोधनहतक.’ इत्यपि पाठान्तराणि २ ‘देव, अजातशत्रो, भीमार्जुनगुरो’ इति बहव पठन्ति । क्वचित् ‘आर्य, देव, अजातशत्रो, भीमार्जुनगुरो’ इति पाठ·. ३ ‘कुतोऽद्यापि सुयोधनहतक’, ‘क्वाद्यापि दुर्योधनहतकः’; ‘अद्यापि दुर्योधनहतक’. ४ ‘मया निहतस्य दुरात्मनस्तस्य’; ‘मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविन’ इति पाठौ ५. ‘क्षिप्त्वा’. ६ ‘असृक्चन्दन भीमगात्रे’ इति बहुसंमत. पाठ , ‘असृक्चन्दनाभ मयाङ्गे’ इत्यपि क्वचित्पाठ . ७. ‘लक्ष्मीरार्ये निषिक्ता’, ‘राजन्, लक्ष्मीर्निषण्णा’. ८. ‘ऊर्व्या’ ९. ‘कुरुकुलमनुजा.’. १०. ‘शेषम्’ इत्यस्मादनन्तरम् ‘भीम०—(पादयोर्निपत्य ।) जयतु जयतु देवः। युधि०—(सत्वर मुक्त्वा भीमसेनमवलोकयन्नसे परामृश्य ।) तात भीम, पृथानन्दन, पाण्डुकुलप्रदीप । ‘भीम०—आज्ञापय । युधि०—वत्स, बाष्पजलान्तरित न पश्यामि ते वदनचन्द्रमनवरतम् । कथय कच्चिज्जीवति भवान्सम किरीटिना । भीम०—देव, निहतसकलरिपुपक्षे त्वयि जीवति भीमार्जुनौ जीवन्तौ । युधि०—(पुनर्गाढमालिङ्गय ।) तात भीम, रिपोरास्ता तावन्निधनम्’ इति क्वचित्पाठो दृश्यते । क्वचित् ‘युधि०—(सहर्ष भीममालिङ्गति ।) भीम०—जयति जयत्यार्य’ । युधि०—वृकोदर, पृथानन्दन, भीमसेन, पाण्डुकुलप्रदीप । भीम०—आज्ञापयत्वार्यः । युधि०—बाष्पसलिलान्तरितत्वान्न पश्यामि ते वदनचन्द्रम् । कथय कच्चिज्जीवति भवान्किरीटिना । भीम०—महाराज, जीवाम्यह सम किरीटिना । युधि०—अयि फाल्गुनाग्रज, रिपोरास्ता तावन्निधनम्’ इत्यपि पाठ उपलभ्यते.

(युधिष्ठिर [1]स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि [2]प्रमार्जयति ।)

**भीमसेनः**—(पादयोः पतित्वा ।) जयत्वार्यः ।

**युधिष्ठिरः**—वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । [3]कथय कच्चिज्जीवति भवान्समं किरीटिना ।

**भीमसेनः**—निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च ।

**युधिष्ठिरः**—([4]पुनर्गाढमालिङ्ग्य ।) [5]तात भीम,

रिपोरास्तां तावन्निधनमिदमाख्याहि [6]शतशः
प्रियो भ्राता [7]सत्यं त्वमसि मम [8]योऽसौ बकरिपुः ।

**भीमसेनः**—आर्य, सोऽहम् ।

**युधिष्ठिरः**—

जरासंधस्योरःसरसि [9]रुधिरासारसलिले
तटाघात[10]क्रीडाललितमकरः [11]संयति भवान् ॥ ४० ॥

[12]**भीमसेनः**—आर्य, स एवाहम् । तन्मुञ्चतु मामार्यः क्षणमेकम् ।

---

लिङ्ग इत्यवधेयम् ॥३९॥ **रिपोरिति ।** रिपोर्निधनं तावदास्ताम् । शत्रुनाशं न पृच्छामीत्यर्थः । इदं शतशः शतं वारानाख्याहि कथय । सरसि जलधाविति व्यस्तरूपकम् । तटाघातो जलधितटहननम् । मकरो जलजन्तुभेदः । 'क्रीडाललितमकरोत्' इति पाठे यः क्रीडाललितं क्रीडारूपं विलासं चकारेत्यर्थः ॥ ४० ॥

---

१. 'स्वैरं मुक्त्वा' इति क्वचिन्नास्ति. २. 'मार्जयति'. ३. 'तत्कथय'. ४. 'सस्नेहं पुनर्गाढमालिङ्ग्य' इति वा पाठः ५ 'तात भीम' इति पाठः क्वचिन्नास्ति. ६. 'सहसा'. ७. 'सत्यं त्वमसि मम' इत्यत्र 'भीमो मम भवसि' इति पुस्तकान्तरे पाठः. ८. 'यो वै बकरिपुः' इति क्वचित्पाठः. ९. 'रुधिरागाधसलिले'; 'रुधिरासारजलधौ'. १०. 'क्रीडाललितमकरोत्' इति पाठः. ११. 'सम्प्रति भवान्'; 'यः स तु भवान्'. १२. 'भीम०—आर्य, मुञ्चतु मां क्षणमेकं भवान्'; 'भीम०—एवमेतत् । किं तु मुञ्चतु मामार्यः क्षणमेकम्', 'भीम०—एवमेतत् । मुञ्चतु मामार्यः', 'भीम०—मुञ्चतु मुञ्चतु मामार्यः क्षणमेकम्'; 'भीम०—मुञ्चतु मामार्यः क्षणमेकम्' इति पाठान्तराणि.

युधिष्ठिरः—किमपरमवशिष्टम् ।

भीमसेनः[1]—सुमहदवशिष्टम् । संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

युधिष्ठिरः—गच्छतु[2] भवान् । अनुभवतु[3] तपस्विनी वेणीसंहारम् ।

भीमसेनः[4]—(द्रौपदीमुपसृत्य ।) देवि पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण । अलमलमेवंविधं मामालोक्य त्रासेन ।

कृष्टा[5] येनासि राज्ञां सदसि नृपशुना तेन[6] दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते राज्ञः कुरूणामतिसरसमिदं[7] मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेऽसृङ्निषक्तं तव रिपुजनितस्यानलस्योपशान्त्यै ॥ ४१ ॥

---

**कृष्टेति** । तस्यैतान्यसृञ्जि मत्पीतशेषाणि मम करयो स्पृश । हे कान्ते, सुयोधनरुधिरमिद प्रत्यङ्ग निषिक्त सबद्धमस्ति ॥ ४१ ॥ निर्वहणमिह श्लोके । यदुक्त तत्रैव—'पूर्व प्रसारिताना तु बीजादीना समापनम् । निर्व्यूढत्वेन क्रियते

---

१. 'भीम०—आर्य, सुमहदवशिष्टम् । सयच्छामि तावदनेन दुर्योधनदु.शासनरुधिरोक्षितेन पाणिना', 'भीम०—आर्य, सुमहदवशिष्टम् । युधि०—वत्स, किम् । भीम०—सयच्छामि तावदनेन सुयोधनशोणिताङ्केन पाणिना', 'भीम०—सुमहदवशिष्टम् । सयमयामि तावदनेन दु शासनशोणितोक्षितेन पाणिना' इति पाठान्तराणि २. 'सत्वरं गच्छतु भवान्' इति बहव. पठन्ति ३. 'अनुभवतु तावत्तपस्विनी वेणीसहारमहोत्सवम्', 'अनुभवतु तपस्विनी वेणीसहारमहोत्सवम्'. ४. 'भीम०—भवति पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण । द्रौपदी—(उपसृत्य ।) जेदु जेदु णाहो । (इति भयादपसर्पति ।) भीम०—राजपुत्रि, अलमेव मामालोक्य त्रासेन । पश्य', 'भीम०—देवि, दिष्ट्या वर्धसे रिपुकुलक्षयेण। द्रौपदी—(उपसृत्य ।) जेदु जेदु णाहो । (इत्यर्धोक्ते भयादपसर्पति ।) भीम०—अयि भीरु, अलमवलोक्यास्मान्त्रासेन । पश्य' इति पाठौ. ५. 'येनाकृष्टासि राज्ञा', 'कृष्टा येनासि तस्मिन्', 'कृष्टा केशेषु तस्मिन्' ६. 'येन'. ७. 'अपि रुधिरमिदं मद्गदाचूर्णितोरोरङ्गेष्वङ्गेषु सक्त तव परिभवजस्यानलस्योपशान्त्यै', 'अपि रुधिरमिदं मद्गदाचूर्णितोरोरङ्गे सद्यो निषक्तं तव परिभवजस्यानलस्योपशान्त्यै' इति पाठौ.

बुद्धिमतिके, [1]क्व सा भानुमती योपहसति पाण्डवदारान् । भवति यज्ञवेदिसंभवे,

द्रौ[2]पदी—आणवेदु णाहो । (क)

भीमसेनः—स्मरति भवती [3]यत्तन्मयोक्तम् । ('चञ्चद्भुज-' (१।२१) [4]इत्यादि पठति ।)

द्रौपदी—[5]णाह, ण केवलं सुमरामि । अणुहवामि अ णाहस्स प्पसादेण । (ख)

भीम[6]सेनः—(वेणीमवधूय ।) भवति, संयम्यतामिदानीं धार्तराष्ट्र-कुलकालरात्रि[7]र्दुःशासनविलुलितेयं वेणी ।

द्रौ[8]पदी—णाह, विसुमरिदह्मि एदं वावारम् । णाहस्स प्पसादेण [9]पुणो वि सिक्खिस्सम् । (ग)

(भीम[10]सेनो वेणीं बध्नाति ।)

(क) आज्ञापयतु नाथः ।

(ख) नाथ, न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन ।

(ग) नाथ, विस्मृतास्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।

तन्निर्वहणमीरितम्' ॥ द्रौपदीवाक्ये । आज्ञापयतु नाथः ॥ नाथ, न केवलं स्मरामि नाथस्य प्रसादेन पुनरनुभवामि ॥ नाथ, विस्मृतोऽय व्यापारो मया ।

१. 'क्व सप्रति भानुमती योपहसति पाण्डवदारान् । भवति वेदिसंभवे याज्ञसेनि'; 'क्व सप्रति भानुमती नोपहसति पाण्डवदारान् । भवति वेदिसभवे याज्ञसेनि', 'क्वासौ भानुमती योपहसति पाण्डवदारान् । भवति यज्ञवेदिसभवे'; 'क्व सा भानुमती । परिभवतु सप्रति पाण्डवदारान् । भवति यज्ञवेदिसंभवे', 'क्व भानुमती योपहसति पाण्डवदारान् । भवति पाञ्चालराजतनये' इति पाठान्तराणि. २. एतद्द्रौपदीवाक्य केषुचित्प्राचीनग्रन्थेषु नास्ति. ३. 'यन्मयोक्तम्', 'यन्मया प्रतिज्ञातम्'. ४. 'इति पूर्वोक्तमेव पठति' इति बहुपुस्तकानां पाठः. ५. 'णाह, सुमरामि अणुहवामि अ।' इति पुस्तकान्तरे पाठः. ६. 'भीम०—भवति, सयम्यतामिदानी', 'भीम०—देवि भवति, संयम्यतामिदानी'. ७. 'दुःशासनविलुलिता वेणी'. ८. 'द्रौपदी—विसुमरिद एद वावारम्' इति साहित्यदर्पणे पाठः. ९. 'पुणो सिक्खिस्सम् । (केशान्बध्नाति ।)' इति दशरूपके पाठः. १०. 'चेटी वेणी बध्नाति' इति बहवः.

(नेपथ्ये ।)

[1]महासमरानलदग्धशेषाय स्वस्ति [2]भवतु राजन्यकुलाय ।

क्रोधान्धैर्यस्य [3]मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
[4]प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि ।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
[5]दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति [6]राज्ञां कुलेभ्यः ॥४२॥

**[7]युधिष्ठिरः**—देवि, एष ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा [8]सिद्धजनेन ।

(तत प्रविशत [9]कृष्णार्जुनौ ।)

**[10]कृष्णः**—(युधिष्ठिरमुपगम्य ।) विजयतां निहतसकलारातिमण्डलः [11]सानुजो युधिष्ठिरः ।

**अर्जुनः**—[12]जयत्वार्यः ।

साम्रत नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ॥ **क्रोधान्धैरिति** । यस्य मोक्षे मोचननिमित्त पार्थिवान्त'पुराणि पाण्डवै क्षेपाच्चालनादधिक्षेपाद्वा निर्मुक्तकेशानि कृतानि । पार्थिवोऽत्र दुर्योधन । तथा च दुर्योधने हते तदन्त पुरनार्योऽनिबद्धकेशाः कृता इति भावः ॥ ४२ ॥ पुण्डरीकाक्ष कृष्ण' । आशास्ते स्वीकरोति ।

---

१. 'महासमरानल······राजन्यकुलाय' इत्येष पाठः क्वचिन्नास्ति. २ 'भवतु राजकुलाय'; 'भवति राजन्यंकुलाय', 'भवते राजन्यलोकाय' इति पाठान्तराणि. ३. 'मोक्षात्कुरुनरपतिभि.', 'मोक्षे हतनरपतिभिः'. ४. 'प्रत्याश मुक्तकेशान्यतुलभुजबलै.', 'क्षेपान्निर्मुक्तकेशान्यनुदिनमधुना'. ५. 'सोऽय बद्ध' प्रजानां', 'सोऽय बद्धः प्रजाभ्य '. ६. 'राजन्यकेभ्य '. ७. 'युधि०—देवि, एष ते वेणीसहारोऽभिनन्द्यते नभस्तलसचारिणा सिद्धजनेन' इति बहुसमत. पाठ., 'कञ्चुकी—कुमार, एष वेणीसहारोऽभिनन्दितः सिद्धजनेन' इत्यपि पाठ' क्वचिदुपलभ्यते ८. 'सिद्धचारणजनेन' ९. 'वासुदेवार्जुनौ', 'केशवार्जुनौ'. १०. 'वासुदेवः—(उपगम्य ।) विजयतां निहतसकलारातिमण्डलः', 'उभौ—(उपगम्य ।) कृष्णः—विजयतां निहतसकलारातिमण्डलः' इति पाठौ. ११. 'सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः' इति बहुपुस्तकानां पाठः. १२. 'जयत्यार्यः'; 'जयतु जयतु देवः'.

युधिष्ठिरः—(विलोक्य ।) अये[2], भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी । भगवन्, कुतस्तस्य[3] विजयादन्यद्यस्य भगवान्पुराणपुरुषो[4] नारायणः स्वयं मङ्गलान्याशास्ते ।

कृतगुरुमहदादिक्षोभसंभूतमूर्ति[5]
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।
अजममरमचिन्त्यं[6] चिन्तयित्वापि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥ ४३ ॥

(अर्जुनमालिङ्ग्य ।) वत्स, परिष्वजस्व माम् ।

---

कृतेत्यादि । हे देव, जगति त्वा चिन्तयित्वापि जनो दुःखी न भवति । किं पुनर्दृष्ट्वा दुःखी भवति । अपि तु न भवतीति भावः । कीदृशम् । कृता गुरोः स्थूलद्रव्यस्य महदादेर्महत्तत्त्वबुद्धितत्त्वादेः पर्वतादेर्वा क्षोभेन परिणामेन संभूता व्यापिका मूर्तिस्त्रिनयनत्वादिरूपा येन तम् । यद्वा । कृतो गुरुः पर्वतादिर्येन स तथा । महदादेराकाशादेः क्षोभेन मिलनेन महाभूतसमाधिना संभूता कृतास्मदादेर्मूर्तिः शरीरं येन स तथा । पश्चाद्विशेषणसमासः । यद्वा । कृतं गुरुकार्यं द्रव्यं येन तादृशेन महदादिना कालाकाशादिना संभूता मिलिता मूर्तिर्यस्य तम् । सामान्यकारणेन सह भगवान्वेदादिकर्तेति भावः । अत एव गुणिनं वेदादिसृष्टियोग्यप्रयत्नादिमन्तम् । यद्वा । गुणाः सत्वरजस्तमोरूपास्तद्योगिनं लोकसृष्टिनाशस्थैर्यकारणं च । तथा च सत्वरजस्तमोरूपं गुणत्रयं सहकारि समासाद्य हरिहरहिरण्यगर्भैरवतारैरयं भगवान्कार्यत्रयकर्तेति भावः । अजमजन्यम् । अमरमनाश्यम् । अचिन्त्यं वाङ्मनसागोचरम् । तदुक्तम्—'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इति । अथ च विरोधाभासः । यो हि संभूतमूर्तिः स कथमजः । यो ह्यचिन्त्यस्तस्य कथं चिन्तेति । अविरोधस्तु दर्शित एव ॥ ४३ ॥ **व्यासोऽयमिति** ।

---

१. 'युधि०—(विलोक्य ।) अये कथं भगवान्वासुदेवः किरीटी च । ('वत्सश्च किरीटी' इत्यपि पाठः) भगवन्, अभिवादये । (किरीटिनं प्रति ।) एह्येहि वत्स, परिष्वजस्व माम् । (अर्जुनः प्रणमति ।) युधि०—(वासुदेवं प्रति ।) देव, कुतस्तस्य विजयादन्यद्यस्य खलु भगवान्पुण्डरीकाक्षः स्वयं मङ्गलमाशास्ते' इति पुस्तकान्तरे पाठः २. 'अय'. ३. 'किमुत मे विजयात्'. ४ 'भगवान्पुराणपुरुषो नारायणो मङ्गलान्याशास्ते', 'भगवान्पुराणपुरुषः स्वयमेव नारायणो मङ्गलान्याशास्ते'. ५. 'संभूतिमुक्त' इति वा पाठः. ६. 'अजमजरमचिन्त्यं चिन्तयित्वा भवन्तं भवति जगददुःखं किं पुनर्देव दृष्ट्वा' इति बहवः पठन्ति.

**कृष्णः**—[1]महाराज[2] युधिष्ठिर,

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो
धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः ।
प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥४४॥

[3]अहं पुनश्चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः ।

**युधिष्ठिरः**—[4]कथं चार्वाकेण रक्षसा वयमेवं विप्रलब्धाः ।

**भीमसेनः**—(सरोषम् ।) क्वासौ धार्तराष्ट्रसखो राक्षसः पुण्यजनापसदो येनार्यस्य [5]महांश्चित्तविभ्रमः कृतः ।

**कृष्णः**—नि[6]गृहीतः स दुरात्मा [7]नकुलेन । [8]तत्कथय महाराज, किमस्मात्परं समीहितं संपादयामि ।

---

जाबालिनामा मुनिः । रामनामा च । धृष्टद्युम्नो मुखमाद्यो येषां ते तथा । उत्तम्भित उत्तोलित । तीर्थवारि जाह्नवीप्रभृतिजलम् । एते तेऽभिषेकाय सन्तीति शेष ॥ ४४ ॥ इहोच्यतां किमन्यदित्यनेन काव्यसंहाररूपकनिर्वहणसंधिः । यदाह—

१ 'कृष्णः—एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेवसात्यकिमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसंभवाश्च राजकुमाराः स्कन्धोत्तम्भिततीर्थवारिकलशास्तवाभिषेकं धारयन्ति' इत्यपि पाठः. २ 'महाराज युधिष्ठिर' इत्यत्र 'महाराज, अजातारे, सत्यवादिन्' इति पुस्तकान्तरे पाठः. ३ 'अहमपि चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह सत्वरमागतः', 'अन्यच्चाहं पुनश्चार्वाकेण दुरात्मना विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरितमागतोऽस्मि', 'अहमपि चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तं जयंधरमुखादुपश्रुत्यार्जुनेन सह त्वरिततरमायातः' इति पाठान्तराणि. ४. 'किं नाम चार्वाकेण विप्रलब्धा वयम् । (सरोषम् ।) क्वासौ धार्तराष्ट्रसखः पुण्यजनापसदो येन मे महांश्चित्तविभ्रमः कृतः' इत्यपि केचित्पठन्ति. ५. 'महानयं चित्तविभ्रमः'. ६. 'गृहीतः', 'निहतः'. ७. 'कुमारनकुलेन'. ८. 'तत्कथय महाराज, किमस्मात्परं समीहितम् ।', 'कथय महाराज, किमस्मात्परं समीहितम् ।', 'युधिष्ठिरः—प्रियं नः । वासुदेवः—उच्यतां किं ते भूयः प्रियमुपकरोमि ।' इति नानाविधानि पाठान्तराणि.

**युधिष्ठिरः**—[1]न किंचिन्न ददाति भगवान्प्रसन्नः। [2]अहं [3]तु पुरुषसाधारणया बुद्ध्या संतुष्यामि । न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देवः ।

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥४५॥

[11]प्रीततरश्चेद्भगवांस्तदिदमस्तु ।

[12]अकृपणमरुक्श्रान्तं जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।

---

वरप्रदानसंप्राप्ति: काव्यसंहार उच्यते'॥ किंचिन्न न ददासि । किं तु ददास्येव । द्वौ निषेधौ प्रकृतमर्थं गमयतः । पुरुषकारः पुरुषव्यापारः । **क्रोधान्धैरिति**। क्रोधान्धैरर्थात्पञ्चपाण्डवैरेव । पञ्चपाण्डवा अक्षता इत्यन्वयः । पाञ्चाल्या निकारसिन्धुर्मम दुर्नयेन विहितस्तीर्णः । पुरुषोत्तम इति । पुरुषेभ्य उत्तम इति समासः । न तु पुरुषेषूत्तम इति । 'न निर्धारणे' इति निषेधात् । न चानेन षष्ठीसमासनिषेधो न तु सप्तमीसमासनिषेध इति वाच्यम् । तथा सति षष्ठीसमासस्याप्राप्तेरेव निषेधात्सर्वत्र सप्तमीसमासेनैव प्रयोगसिद्धेः । तस्मात्पञ्चमीसमास एवायमित्यदोषः । सुकृतिनं पुण्यवन्तम् ॥ ४५ ॥ **अकृपणमिति**। अकृपणं कार्पण्यरहितमरुक्श्रान्तं न रोगेण परिश्रान्तं च यथा स्यादेवं लोकः पुरुषायुषं

---

१. 'एवं पुण्डरीकाक्ष, न किंचिन्न ददाति भगवान्प्रसन्नः ।', 'भगवन्, पुण्डरीकाक्ष, किं न ददासि प्रसन्नः । परमपि प्रियमस्ति ।'; 'भगवन्, पुण्डरीकाक्ष, किं न ददासि प्रसन्नः । अतः परमपि प्रियमस्ति ।' इति पाठान्तराणि. २ 'अहं तु पुरुषसाधारणया बुद्ध्या न खल्वतः परं प्रियमभ्यर्थये । यतः पश्यतु देवः', 'अहं तु पुरुषार्थचतुष्टयया बुद्ध्या न खल्वतः परं प्रियमभ्यर्थयितुं क्षमः । पश्यतु देवः' इति पाठौ. ३. 'तु' इति क्वचिन्नास्ति. ४. 'अर्थयितुं'. ५. 'क्रोधान्ध'; 'क्रोधात् ततः'. ६. 'रिपुबलं'. ७. 'दुर्नये पतितया'; 'दुर्नयेन विहितः' ८. 'निकारोदधिः'. ९. 'मामद्य संभाषसे'. १०; 'प्रियतरं यत्प्रार्थये त्वामहम्' इति वा पाठः. ११. 'तथापि प्रीतश्चेद्भगवांस्तदिदमस्तु'. 'तथापि प्रीतश्चेद्भगवांस्तदिदमस्तु भरतवाक्यम् ।', 'प्रीततरश्चेद्भगवांस्तदिदमेवमस्तु'; 'प्रसन्नतरश्च भगवांस्तदिदं भवतु', 'तथापीदं भवतु' इति नानाविधानि पाठान्तराणि. १२ 'अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं भवतु च भवद्भक्तिर्द्वैधं विना पुरुषोत्तमे' इत्यपि पाठः

दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥ ४६ ॥

कृष्णः[2]—एवमस्तु ।

(इति निष्क्रान्ता सर्वे ।)

इति षष्ठोऽङ्कः ।

समाप्तमिदं वेणीसंहारं नाम नाटकम् ।

जीव्याज्जीवतु । पुरुषायुषमिति 'अचतुर-' इत्यादौ साधितम् । हे भगवन्, द्वैत विनाऽद्वैतक्रमेण । पुरुषोत्तमे भक्तिर्भवतु । मम जनानामिति शेषः । पण्डितगुणेषु पण्डितजनो विहितहृदयो दत्तचित्त सानुरागो वा भवतु । भूपः सदा पुण्यवा-न्प्रसाधितराजचक्रश्च भूयात् ॥ ४६ ॥

१. अस्य श्लोकस्य स्थाने—

'अवनिमवनिपालाः पान्तु वृष्टिं विधत्ता
जगति जलधराली शस्यपूर्णास्तु भूमिः ।
त्वयि मुरनरकारौ भक्तिरद्वैतयोगा-
द्भवतु मम सुदीर्घं हव्यमश्नन्तु देवाः ॥ १ ॥

अपि च ।

स्वस्ति श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरस्थलो
हेतुः सर्वजये सुरासुरवधूवक्त्राब्जचन्द्रोदयः ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भू-
र्भाति स्म प्रलयाब्धिपङ्किलतलोत्खातैकमुस्ताकृतिः ॥ २ ॥'

इति पाठः क्वचिदुपलभ्यते. २. 'कृष्णः—एवमस्तु' इति क्वचिन्नास्ति.

इदं च विदग्धस्निग्धवियोगदुर्मनसा विप्रलपितं तेन कविना—

काव्यालापसुभाषितव्यसनिनस्ते राजहंसा गता-
स्ता गोष्ठ्यः क्षयमागता गुणलवश्लाघ्या न वाचः सताम् ।
सालंकाररसप्रसन्नमधुराकाराः कवीनां गिरः
प्राप्ता नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान् ॥४७॥

विदग्धा नागरा । स्निग्धा स्नेहवन्त. । तेषा योऽत्र वियोगो विश्लेषस्तेन दुर्मनायमान मनो यस्य तेन कविनेद विप्रलपितम् । तदाह—**काव्यानामिति** । ते राजहसा राजश्रेष्ठा गता । 'राजवश्या' इति पाठे राजान इत्यर्थ । कीदृशा' । काव्याना किरातादीना सुभाषिते सूक्तौ व्यसन येषा ते तथा । ताश्च गोष्ठ्य क्षय नाशमागता' । तथा च सत्कविताग्राहका नरपत्यादयो न सन्त्येवाधुनेति भाव । सता साधूना वाच पुनर्गुणलवैर्गुणकणैः श्लाघ्या. श्लाघाविषयाः । मत्कवीना या गिर सालकारा रसोक्त्या वक्राः । अनृजवो मधुरा. कोमलाश्च । तासा गुणान्तर गुणाधिक्यमिदमस्तु । यथाकामेप्सिताना मनीषितानां गुणान्तर भवति तथेत्यर्थ । अत्र च कवेरयमाशयः । मत्कविताया अप्यलकारशालिता रसयोगिता च स्वभावसिद्धैव । भगवत्प्रसादेन पुनर्गुणान्तरयोगित्वमपि भवतु । तथा च काव्यलक्षण समस्तमिहापि स्यात् । तत्कर्तृतया च कीर्तिर्विवर्तलाभः प्रीतिलाभश्च स्यादिति । तदुक्त सरस्वतीकण्ठाभरणे—'निर्दोष गुणवत्काव्यमलकारैरलकृतम् । रसान्वित कवि कुर्वन्कीर्ति प्राति च विन्दति' ॥ ४७ ॥

---

कतीह नाटकाम्बुधौ स्फुरन्ति नोज्वला रसा' ।
मदीयबुद्धिरल्पिका क्व वेद तानशेषत ॥ १ ॥
नानादर मम कृतौ नियत तनुध्व-
मत्राधुनातनतया गुणदोषविज्ञा' ।
ग्राह्य शिशोरपि सुभाषितमित्थमात्थ
यूय ततोऽपि मम टिप्पनमाद्रियध्वम् ॥ २ ॥
लब्ध दुर्लभशासन सुरगणग्रामोऽभिरामो गुणै-
र्विद्यावशविभूषणे अपि शुभे छत्रे उभे धारिते ।
येनाय समभूद्द्विजातितिलकश्चण्डेश्वर' पण्डितो
मीमासैकरहस्यवश्यहृदयो दातावदाताशयः ॥ ३ ॥

---

१. 'विदग्धविवेकदुर्मनसा'. २. 'राजवश्या'. ३. 'गुणलवश्लाघ्यः प्रवादः सताम्' इति पाठः. ४. 'शान्तिं प्रापुरवाप दुर्जनगणो वाक्याटवी साम्प्रतम्' इति पाठः.

प्रासूतासावहितनगरीनागरीगीतकीर्तिं
विप्रे क्षिप्रं गुणदमधिकं वेदपूर्वं धरं तम् ।
कैवर्तानामलभत नृपाच्छासनं सोऽयमुच्चै-
रापत्पुत्रं गुणमयतनुं रामपूर्वं धरं तम् ॥ ४ ॥

सोऽयं थुवामनगरे पदमाप शुद्धे
मीमांसको विमलकीर्तिपवित्रमूर्तिः ।
पुत्रं गदाधरमवाप गुणैरगाधं
सत्तान्त्रिकं गुणिगणप्रथिताभिमानम् ॥ ५ ॥

असूत विद्याधरमेष धीरं गुणैरनूनं सुकृताधिवासम् ।
तं रत्नपूर्वं धरमाप पुत्रं सोऽपि प्रसिद्धं गुणिना गुणेन ॥ ६ ॥

दमयन्त्यामयं धीरो लेभे सुतमरिंदमम् ।
श्रीजगद्धरनामानमनर्घगुणशालिनम् ॥ ७ ॥

विद्याछत्रं कुलछत्रं धरितं येन धीमताम् ।
जगद्धरः सुरगणे सोऽयं नैयायिकः कविः ॥ ८ ॥

येनापाठि कठोरगौतममतं वैशेषिकं खण्डनं
येनाश्रावि सकोषकाव्यनिवहं तत्पाणिनीयं मतम् ।
छन्दोऽलंकरणं च शुद्धभरतं येनाध्यगायि स्थिरं
तेनानेन जगद्धरेण कविना टीका कृतेयं मुदा ॥ ९ ॥

नानालंकृतिसुन्दरी रसवती नानागुणानां निधि-
र्नानाभावविभावनैकचतुरा नानार्थसार्थाधिका ।
टीकेयं विमलाङ्गनेव रहिता दोषैरशेषैरत-
स्तामेतामधिभूषयन्तु कृतिनस्तेभ्यो नमः सर्वदा ॥ १० ॥

यदि भवति मदीयग्रन्थमध्ये प्रमादः
क्वचिदपि स महिम्ना शोधनीयो महद्भिः ।
स्खलति गमनकारी प्रायशो नात्र चित्रं
भवति च गुरुहस्तालम्बनोऽपि प्रकारः ॥ ११ ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ व्यरंसीत्षष्ठोऽयमङ्को वरटिप्पनेऽत्र ॥ १२ ॥

**इति महामहोपाध्यायधर्माधिकारिकश्रीजगद्धरकृतौ वेणीसंहारटीकायां षष्ठोङ्कः समाप्तः ।**

**॥ शुभमस्तु ॥**

# वेणीसंहारस्थपद्यानामनुक्रमणी ।

श

शनिमाहात्म्य. (ओवीबद्ध.) ... किमत २ आणे, ट. ॥ आणा.
शिवलीलामृत मोठें. ... ... किमत १२ आणे, ट. २ आणे.
शिवलीलामृत. रेशमी ... ... किमत ८ आणे, ट. १॥ आणा.
शूद्रकमलाकर. ... ... ... किमत ४ रुपये, ट. ४ आणे.
श्रीएकनाथचरित्र. ... ... ... किमत १२ आणे, ट. २ आणे.
श्रीधरकृत पांडवप्रताप. ... ... किमत ४ रुपये, ट. १४ आणे.
श्रीमंत पहिले बाजीराव बल्लाळ पेशवे यांचे चरित्र.
किमत ८ आणे, ट. २ आणे.
श्रीज्ञानेश्वरचरित्र. ... ... ... किमत १२ आणे, ट. २ आणे.
सदाचार. ... .. ... ... किमत १। रुपया, ट. २ आणे.
सद्वर्तन. ... ... ... . किमत १२ आणे, ट. १॥ आणा.
साहा सुलभ संवाद. ... ... किमत १ आणा, ट. ॥ आणा.
साम्युएल जान्सन.... ... ... किमत ७ आणे, ट. १ आणा.
सावित्रीचरित्र. ... ... ... किमत १ आणा, ट. ॥ आणा.
सुगम प्रियदर्शिका... ... ... किमत २ आणे, ट. ॥ आणा.
सुलभ विक्रमोर्वशी. ... ... किमत ३ आणे, ट. ॥ आणा.
सुलभशाकुंतल. ... ... ... किमत २॥ आणे, ट. ॥ आणा.
सुशीलयमुना अथवा वासुदेव बळवंत फडक्यांच्या बंडांची
धामधूम. ... ... ... किमत १२ आणे, ट. १॥ आणा.
सोपी गाणी. ... ... ... किमत १ आणा, ट. ॥ आणा.
सोळासोमवार. ... ... ... किमत १ आणा, ट. ॥ आणा.
सौंदर्यलहरी व तिची समश्लोकी टीका. किमत ५ आणे, ट. १ आणा.
स्त्रीगीत. ... ... ... ... किमत ३ आणे, ट. ॥ आणा.
स्त्रीशिक्षणबोध. ... ... ... किमत २ आणे, ट. ॥ आणा.
हरिविजय. (ओवीबद्ध.)... ... किमत २ रुपये, ट. ८ आणे.
श्रीमद्भगवद्गीता, सुबोधचंद्रिका. ... किमत १० आणे, ट. १ आणा.
बालबोध पहिले पुस्तक. ... ... किमत १ आ. ट. दहाप्रतींस १ आ.
,, दुसरे पुस्तक. ... ... किमत २ आणे, ट. ॥ आणा.
मऱ्हाठ्यांच्या संबधानें चार उद्गार... किमत १। रुपया, ट. २ आणे.
निवडक बोधपर पदें व अभंग. ... किमत १॥ आणा, ट. ॥ आणा.

---

ही पुस्तकें मुंबईत काळकादेवीच्या रस्त्यावरील "निर्णयसागर" छापखान्यांत रोख पैसे पाठविले असतां विकत मिळतील